अथ तत्तत्कर्म्मणामननुगमात् कथं मुक्तिरनुगता दुःखध्वंसे प्रकाराभावादिति चेत् । न । गुणनाशे समवाय्यसमवायिनाश-
विरोधिगुणानां नाशकत्वनियमात् तत्तन्नाशविशेषे तु तत्तद्धेतुरितिचेत्, तर्हि तत्तद्दुःखध्वंसे तत्तत्कर्म्मणामपि तथात्वमस्तु,
तत्रापि तत्वज्ञानतत्प्रतिबन्धकदुरितध्वंसे चाननुगतानामेव तत्तत्कर्म्मणां जनकत्वम् मुमुक्षुमुद्दिश्य विहितत्वं वानुगतमस्तीति चेत् ।
न । ज्ञानकर्म्मणो र्निरपेक्षकारणताश्रवणात् व्रीहियववद् विकल्प एव । निरपेक्षैकसाधनावरुद्धेऽपरसाधनावरुद्धेऽपरसाधनान्वयो न वि-
कल्पमन्तरेण सम्भवति आकांक्षाविरहादिति न्यायात । साहित्यबोधकं विनैकं प्रत्येकस्य हेतुता यत्र शब्देन बोध्यते तत्र विकल्पेनान्वयो
यथा व्रीहियवयोरितिव्युत्पत्तेर्वा । वस्तुतस्तु दृढभूमिसवासनमिथ्याज्ञानोन्मूलनं विना न मोक्ष इत्युभयसिद्धम् तादृशमिथ्याज्ञाननाशे
चान्वयव्यतिरेकाभ्यां तत्वज्ञानकारणमवधारितमतो न तेन विना स इति तत्रापि तत्वज्ञानमावश्यकम् । यद्यपि मिथ्याज्ञाननाशे विरोधि
गुणस्यैव हेतुत्वम् तथापि मिथ्याज्ञानप्रागभावसहवृत्ति मिथ्याज्ञानध्वंसस्य तदेकसाध्यत्वम् "आत्मा ज्ञातव्यो न स पुनरावर्तते"
इति श्रुतेर्मोक्षम्प्रति तत्वज्ञानस्य हेतुत्वावधारणाच्च "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽनाय" इति श्रुत्या तत्व-
ज्ञानं विना न मोक्षः किन्तु तस्मिन् सत्येवेति प्रतिपादनाच्च । अन्यथा स्वर्गादौ न शरीरादयः कल्प्येरन् । कर्म्मणां तत्वज्ञानद्वारापि
मुक्तिजनकत्वसम्भवात् प्रमाणवतो गौरवञ्च न दोषाय कर्म्मणां तत्वज्ञानविशेष एव जनकत्वं अतो न तत्राननुगमो दोषाय ।

-----------------------

वाराणसीमरणस्य तत्त्वज्ञानफलकत्वमागमादेवावगम्यते । तत्त्वज्ञानादद्त्तफलान्येव कर्म्माणि प्रायश्चित्तादिव विनश्यन्ति अनन्यथा-
सिद्धिशब्दबलात् । नच प्रायश्चित्तस्य दुरितोत्पत्तिनिमित्तकत्वं पापनाशफलश्रवणात् । अत एव न ब्रह्महत्यादीनां प्रायश्चित्तदुःखमेव
फलं नरकफलश्रुतिविरोधात् प्रायश्चित्तविधिवैयर्थ्याच्च दुःखैकफलत्वेन तत्राप्रवृत्तेः । नापि कर्मान्तराधिकार एव फलं महापातका-
तिरेके ऽनधिकाराभावात् अन्यथा यत्किञ्चित्पापवतो ऽकृतप्रायश्चित्तत्वेनानधिकारापत्तेः प्राणान्तिके तदभावाच्च । श्रूयते हि:—
"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्म्माणि तस्मिन्दृष्टे परात्मनि" स्मृतिश्च "ज्ञानाग्निः सर्वकर्म्माणि
भस्मसात्कुरुते ऽर्जुन" इति "नाभुक्तं क्षीयते कर्मे"त्यत्र प्रायश्चित्तादिस्मृतितः सङ्कोचस्यावश्यकत्वेन शब्दबोधितनाशकनाश्यकर्म-
परत्वं लाघवात् नतु तत्तदन्यकर्म्मपरत्वं गौरवात् पापपुण्यक्षयहेतूनां बहुतरत्वात् । ज्ञानस्यनाशकत्वं शब्दबोध्यमित्युक्तम्
अथ भस्मसात्पदस्य लाक्षणिकत्वेन यथा वह्नेः परम्परया भस्म तथा ज्ञानात्कर्म्मक्षय इत्यर्थः । तथाच "नाभुक्तं क्षीयते कर्म्मे"ति स्मृति-
रुत्सर्गतो भोगेनैव क्षयमाह अनन्यथासिद्धप्रायश्चित्तविधिना सा बाध्यते ज्ञाननाश्यत्वञ्च भोगद्वारापि सम्भवतीत्यबाधे सम्भवति
बाधकल्पना नेति चेत् । न । कर्म्मणो भोगनाश्यत्वे ज्ञानस्यानाशकत्वात् । नहि भोगस्तत्त्वज्ञानव्यापारः तथाश्रवणात् तेन विनापि कर्म्मण
एव तदुपपत्तेश्च । कर्म्मणो भोगनाश्यत्वे तत्त्वज्ञानानुपयोगात् । यत्तु नाभुक्तमिति स्मृतिविरोधेन क्षीयन्त इत्यादिश्रुतेरन्यथावर्णनम् ।

तन्न। स्मृतेः प्रत्यक्षवेदबाधितत्वेन विरुद्धार्थकवेदाननुमापकत्वात्। वामदेव सौभरि प्रभृतीनां कायव्यूह श्रवणात्तत्वज्ञानेन

कायव्यूहमुत्पाद्य भोगद्वारा कर्मक्षय इति चेत्। न। तपः प्रभावादेव तत्वज्ञानानुत्पादेऽपि कायव्यूह सम्भवात् भोगजननार्थैश्च

कर्म्मभिरवश्यं तत्तत्काय निष्पादनमिति न तत्र तत्वज्ञानोपयोगः यौगपद्यञ्च कायानां तज्जनक कर्मस्वभावात् तपःस्वभावाद्वा।

नच ज्ञानं भोगद्वारा कर्मनाशकं इत्युक्तम्। एतेनागमयोः परस्पर विरोधात् अनिर्णये विमतिपदं कर्म भोगनाश्यं प्रायश्चित्ताद्य-

नाश्यत्वे सति कर्मत्वात् भुक्तभुज्यमान कर्मवदित्यनुमानान्निर्णयः इत्यपास्तम् ज्ञानस्य प्रायश्चित्त तुल्यत्वेनाप्रयोजकत्वात् श्रुति-

बाधितत्वाच्च शब्दबोधित नाशकानाश्यत्वस्योपाधित्वाच्च अकृत प्रधानेन कृत प्रधानेन चाङ्गापूर्वेण व्यभिचाराच्च तस्य प्रधानयागाद-

नाश्यत्वात्। नच तस्यापि यागस्येव स्वर्गफलकत्वमिति तन्नाश्यत्वमेव अधिकृताधिकारेऽपि स्वर्गकामस्याधिकारात् अन्यथा

निष्फलेऽप्रवृत्तेरिति वाच्यं। स्वर्गफलत्वेऽङ्गत्व विरोधात्। प्रतीतिस्व फलवद्यागार्थितया। तदुक्तं " प्रधाने रागादङ्गे वैधीति।

ननु तावदेवास्य चिरं यावन्न विमोक्षः अथ सम्पत्स्यत केवल्येन इति श्रुतेः तावदेवास्योत्पन्न तत्वज्ञानस्य चिरं विलम्बो यावन्नोत्पन्न

कर्म्मणो विमोक्षः अथ सम्पत्स्यते केवल्येनेत्यत्र भोगेन क्षययित्वा इति शेषः। नच शेषे मानाभावः सत्यपि विज्ञाने कर्म्मावस्थाने

क्लृप्त सामर्थ्यस्य भोगस्यैव नाशकत्वेनाक्षेपादिति चेत्। न। तत्वज्ञाने सति तत्वज्ञानदशायां न मोक्षः किन्तु तदग्रिमक्षण इत्यार्थत्वेनाप्युपपत्तेः।

यत्तु अकृत प्रधानाङ्गपूर्वाभिप्रायमेतत् " ज्ञानाग्निः सर्वकर्माणीत्यादि तेषां कार्य्याणां नाशकान्तराभावादिति । तन्न । प्रधानार्थि-
तया कृतानां तदभावे तत्सामर्थ्यासिद्धेः ततस्तत्वेऽपि सर्व[illegible]भोगान्तरपोर ग्राहकस्य सङ्कोचे मानाभावात् । यद्यपि भस्मसात्करणा-
दिना फलाजनकत्वमुच्यते तत्वज्ञानात्कृतमपि विहितं [illegible] न फलायेति । तथा च श्रुतिः तद्यथा " पुष्करपलाशेनापः श्लिष्यन्ते "
इत्यादि । तदपि न । नहि भस्मसात्करणं क्षयश्चानुपपद्यते । नच लक्षणा, मुख्ये बाधकाभावादिति । उच्यते । कर्म्मणो
भोगनाश्यत्वेऽपि ज्ञानस्य कर्म्मनाशकत्वम् भोगस्य तत्वज्ञानव्यापारत्वात् । नच भोगमात्रस्यैव कर्म्मनाशे सामर्थ्यात्तत्वज्ञान व्यभि-
चारः कर्मप्रागभावासहवृत्ति कर्म्मनाशे युगपत्कर्म्मभोगेऽव्यभिचारात् । अत एवानुमानेनागमबाधाप्रयोजकत्वेन च श्रुति-
वाक्यशेषे मानाभावः । उत्पन्नतत्वज्ञानस्यापवर्गो[illegible]पादनार्थं उक्तरीत्या भोगस्यैवापेक्षणादिति तदस्यापवर्गस्य
परमपुरुषार्थस्य श्रुतिसिद्धं कारणमनुमानमि[illegible] विविक्तम् ॥

इति श्री महामहोपाध्याय श्रीगङ्गेशविरचिते त[त्त्वचि]न्तामणौ अनुमानाख्यद्वितीयखण्डे ईश्वरानुमानं ।

समाप्तश्च द्वितीय[illegible]खण्डं ॥

अथ [illegible]ां ककार

प्रत्ययानुपपत्तिः न चक

तरत्वादनाना धर्म स्वीकारो

व्यक्ति वृत्तित्वे जाति रूपतानुपपत्तेः न च

मासिद्धकत्वादिना संकर प्रसंगादिति वाच्यम्, कत्वादिव्याप्य

त्वादेरुपगमात्, न च तारत्वादिकस्य वा नाना कत्वादिकं वेत्य

गमना विरह इति वाच्यम्, कत्वादेर्नानात्वे तारमंद साधारणक

धनुगत प्रत्ययानुपपत्तेरिति चेन्न तारत्वादेः कत्वादिव्याप्य नानात्

त्वेककारादि साधारणताराकारानुगत प्रत्ययानुपपत्तेः न च तदाहि

दिः अनुभवापलापात्, न च नाना तारत्वादेः व्याप्य सजातीय साक्षा

त्कार प्रतिबंधकतावच्छेदक शब्द वृत्ति जातित्वादिना नुगमात्ता

कारानुगत प्रत्ययोपपत्तिरिति वाच्यं तादृश प्रतिबंधकतावच्छेदकत्वा

धनुपस्थितावपि तादृशानुगत प्रत्ययोत्पत्तेः एतत्यापि स्वत्व घ [illegible]ना

ननुगतत्वाच्च, तस्मात्तारत्व तारतरत्वादिक मनुगतत्वात्लाघ [illegible] ककका-

रगकारादि साधारणमखंडोपाधि: तच्च सर्वमेकत्याप्येककारीव

व्यक्तौ वर्तत इति न तादृश प्रत्ययानुपपत्तिः अथवा तारत्व तारत-
रत्वादिकं वायु निष्ठैव जातिः तच्च दोष विशेष वशात् शब्दनिष्ठतया
भासते दर्पणा निष्ठतया मुखादाविव, तत्रापि ताराद्युत्पत्ति नियमाय
वायुनिष्ठ वैलक्षण्यस्यावश्यकतया तस्यैव लाघवेन तारत्व तार-
तरत्वादि रूपतायानुचितत्वात् न च तस्य वायु धर्मत्वे श्रोत्रेन्द्रियेण
कथं तद्ग्रहः कर्ण शष्कुल्यवच्छिन्नत्वगिन्द्रियोपनीतस्य श्रोत्रेण-
मानाभ्युपगमे तारत्वं स्पृशामीत्यनुव्यवसायापत्तिः तारत्वं शृणोमीत्य-
नुव्यवसायानुपपत्तिश्चेति वाच्यं, वायुनिष्ठ धर्मान्तरस्य श्रोत्रायोग्य-
त्वेपि तारत्वादेस्तद्योग्यता स्वीकारात् । योग्यतायाः फलबलकल्प्य-
त्वात् । न च श्रोत्रेण वायुनिष्ठतारत्वादि प्रत्यक्षाभ्युपगमे श्रोत्र संयुक्त
समवायातिरिक्त प्रत्यासत्तिकल्पनापत्तिरिति वाच्यम्, अप्रत्यासन्नस्यैव
तारत्वादेः श्रोत्रेण ग्रहात् वक्ष्यमाण क्रमेण विलक्षण वायु संयोगस्य ता-
रत्वादि व्यंजकतयैवेति प्रसंग विरहात्, ननु तथापि ककार गकारादी-
नां नित्यत्वे ककाराद्येक साक्षात्कार दशायां गकारादि सर्व शब्द साक्षा-
त्कारापत्तिः सर्वेषामेव शब्दानाम् सर्वदा कर्ण शष्कुल्यवच्छेदेन सत्वा-

दिति चेन्न, न्यायनये वर्णानाम् प्रति नियत जनक जन्यत्वाभ्युप

गमेन ककाराद्युत्पादक विलक्षण वायु संयोगस्यैवास्मन्मते वर्णा-

नां प्रति नियत व्यंजक व्यंग्यत्वाभ्युपगमेन ककारादि साक्षात्कार

जनकतया तद्विरहादेव युगपदेव सर्व शब्दोपलब्ध्य संभवात्,

कंठाद्यभिघातच्च तत्र विलक्षण वायुक्रिया संपादकतयोपयु-

ज्यते। ननु न्यायनये पत्रावच्छेदकता संबंधेन ककाराद्युत्पत्ति(त्व)

समवाय संबंधेन विलक्षण वायु संयोग इति सामानाधिकरण्य प्र-

त्यासत्या वायु संयोगानां ककारादि हेतुत्व मतो न कर्णांतरे ककारा-

द्युत्पत्तिः तत्पुरुषीय शब्द लौकिक साक्षात्कारं प्रति तत्पुरुषीयकर्णाव-

च्छिन्न औत्र समवायस्याविच्छिन्नता संबंधेन तत्पुरुषीय कर्णस्य वा

विषय निष्ठतया हेतुत्व मतो न तत्पुरुषीयकर्णावच्छेदेनात्यंत्र शब्दस्य

पुरुषांतरेण ग्रहणं भवन्मते च तत्तद्विलक्षण वायु संयोगानां ककारादि

साक्षात्कारं प्रति कया प्रत्यासत्या हेतुत्वं अव्यवहित पूर्व वर्तिता

मात्रेण हेतुत्वे युगपत्सर्व शब्दोपलब्धे दुर्वारत्वात् सर्व दैवावश्यं

यत्किंचित्कर्णावच्छेदेन तत्तद्विलक्षण वायु संयोग सत्वात्, कर्णस्य-

ज्ञानानवच्छेदकतया ~~ब~~ यत्करणावच्छेदेन ककारादि साक्षात्कार-

स्तत्र विलक्षण वायु संयोग इति क्रमेण हेतुत्वा संभवात्, न च स्वीय-

कर्णावच्छिन्न विलक्षण वायु संयोगस्य फलबलकल्प्यतया क-

कारादि साक्षात्कार दशायामेव तस्यात्म निष्ठत्वान्नाति प्रसंगइतिवा-

च्यम्, आत्मनो विभुत्वादेकस्य पुरुषस्य कर्णावच्छेदेन विलक्षण-

वायोः संयोग~~[illegible]~~

दशायां सर्वेषामेव पुरुषाणामात्मनि तदवच्छेदेन विलक्षण वायोः

संयोगस्यावश्यकत्वेनाति प्रसंग तादवस्थ्यात् नहि संयोगानिष्ठ

वैलक्षण्यं जनकतावच्छेदकं कर्मजन्यतावच्छेदक संयोग जन्यता

वच्छेदक जात्योर्नानात्वापत्तेः अपि तु वायुनिष्ठमेवेति चेन्न ममापि

तत्तद्वायु संयोगानां शरीर निष्ठतया ककारादि साक्षात्कार हेतुत्वात्

न चैवं हस्ताद्यवच्छेदेन विलक्षण वायोः संयोगस्य सत्वेपि ककारादि

साक्षात्कारापत्तेरिति वाच्यं, कर्णावच्छिन्न विलक्षण वायु संयोगत्वेन

हेतुत्वात् पुरुषान्तरीय कर्णेन पुरुषान्तरीय शरीर निष्ठ संयोगावच्छेदकः

विलक्षण वायु संयोगस्य फलबलकल्प्यतया ककारादिसाक्षात्कार-

दशायामेव तस्य शरीरे सत्वेन हस्ताद्यवच्छिन्नसंयोगस्य हेतुत्वेऽ-
क्षति विरहाच्च, इत्थं च श्रोत्रसमवायादेरपि न प्रत्यासत्तित्वं तत्त-
द्विलक्षण वायुसंयोगानां व्यंजकत्वस्यावश्यकतयैवान्यथा प्रसंगात्,
न च तथापि न्यायनये विलक्षणवायुसंयोगानां कत्वादिकमेव
समवायेन कार्यतावच्छेदकं भवन्मते च ककारादिविषयकसाक्षात्का-
रत्वमिति महागौरवं न्यायनये नंत ककारादि कल्पनं तत्तत्पुरुषीय
शब्द साक्षात्कारं प्रति तत्तत्पुरुषीय श्रोत्र समवायादेर्हेतुत्व कल्पनं
च फलमुखमिति वाच्यम्, व्यक्ति कल्पनास्थले फलमुखगौरव-
स्यापि दोषत्वात्, ममापि लौकिकविषयता संबंधेन कका-
रादि व्यक्तेरेकैकतया ककारादिकत्वाद्यौरविशेषाच्च, न च
तथापि लौकिक विषयत्वस्य स्वरूप संबंधात्मकस्याननुगततया
कार्यतावच्छेदकता नियामक संबंधत्वे गौरवमिति वाच्यं, सम-
वायवत् लौकिकविषयत्वस्याप्येकत्वात् नापि समवायस्यैक-
त्वेन समवायसंबंधावच्छिन्नाधारत्वस्यैव प्रतिव्यक्तिभिन्नतया
स्वरूपसंबंधात्मकस्य कार्यतावच्छेदकतानियामक संबंधत्वेनाननुगम-

गौरवस्य सत्वाच्च नच तथापि तत्तत्कत्वादिरूपेण कादिव्यक्ते-रवच्छेदिका व्यापकत्वे तु स्वरूपतः कत्वादिव्यक्तेरिति लाघवमि-ति वाच्यं, ममापि स्वरूपतः कादिव्यक्तेरवच्छेदकत्वात्, नच जात्यतिरिक्तपदार्थस्य किंचिद्रूप प्रकारेणैव मानमिति कथं कादिव्यक्तेः स्वरूपतोवच्छेदकमिति वाच्यम्, कादिव्यक्तेः स्वरूप-तोवच्छेदकत्वेपि कार्यकारण भावग्रहे कत्वादिरूपेणमानात्, नहि जात्यतिरिक्त पदार्थस्य किंचिद्रूपेणमानवत् किंचिद्रूपेणावच्छेद-कत्वमित्यपि नियमोस्ति मानाभावात्, अथ तथापि तत्तल्लौकिक-विषयताक व्यक्तित्वावच्छेदिका लौकिकविषयताकत्वं चेत्तत्र विनिगमकाभावात्कार्यकारणभावद्वयापत्तेः नच कत्वस्यावच्छेद-कत्वेपि विलक्षणवायुसंयोगाभाव दशायां ककारसाक्षात्कारापत्त्या ककारव्यक्तेरवच्छेदकत्वावश्यकत्वमेव विनिगमकमिति वाच्यम्, एवं सति विलक्षणवायुसंयोगाभाव दशायां कत्व साक्षात्कारा-पत्त्या कत्वस्यावच्छेदकत्वावश्यकत्वादिति चेन्न ककाराविषयक कत्व साक्षात्कारस्यालीकतया कत्व साक्षात्कारसामग्री विरहादेव

तदानीं कत्व साक्षात्कारा संभवेन कत्वस्यानवच्छेदकत्वात्
कोलाहल स्थले कत्वाविषयकस्यापि साक्षात्कारस्य सत्वेन
व्यक्तेरवच्छेदकत्वस्य चावश्यकत्वादिति वदंति तदसत् ।
वर्णानि प्रतिनियत व्यंजकव्यंग्या: एकावच्छेदेन समान देशत्वे
सति समानेन्द्रिय ग्राह्यत्वात्, घटैकत्वपरिमाणवदित्यनुमानेन
वर्णानां प्रतिनियत व्यंजक व्यंग्यत्वाभावासिद्ध्या ककार गका-
रादीनां नित्यत्वे ककाराद्येक साक्षात्कार दशायां गकारादि-
सर्व शब्द साक्षात्कारापत्तेर्वक्षणोऽपि दुरुद्धरत्वात्, ननु वर्णान-
प्रतिनियत व्यंजकव्यंग्या: एकावच्छेदेन समान देशत्वे सति
समानेन्द्रिय ग्राह्यत्वात् घटैकत्वपरिमाणवत्, इत्यत्र किंनाम
प्रतिनियत व्यंजकव्यंग्यत्वं न तावत्तद्विषयक साक्षात्काराजनक-
जन्य साक्षात्कार विषयत्वं तथासति तथाविध विषयत्वस्मा-
वस्य प्रकृते साध्यतायां घटैकत्वे घट वृत्येकत्वपरिमाणविषयक साक्षा-
त्कारा जनकं ~~चक्~~ यत्तदेकत्वविषयकं साक्षात्कार जनकं एकत्व-
विषयक तद्ज्ञानं तज्जन्य साक्षात्कार विषयत्वस्य सत्वे न तथा-

त्विष साध्या सत्वा व्यभिचार इति चेन्न, स्वविषयक साक्षात्का-
राजनकजन्य साक्षात्कार विषय तत्कत्वे सति तद्विषयक-
साक्षात्काराजनकजन्य साक्षात्कार विषयी भूतं यद्यत्वं-
तद्भिन्नत्वस्य प्रकृतानुमाने साध्यत्वेनानुपपत्त्यभावात्, स्वपदं
भेद प्रतियोगिपरं तथा च यत्, एकावच्छेदेन यत्समान देश-
त्वेसति यद् ग्राहकेन्द्रिय ग्राह्यं भवति तत्स्वविषयक साक्षा-
त्काराजनक जन्य साक्षात्कार विषय तत्कत्वे सति तद्विषयक-
साक्षात्काराजनक जन्य साक्षात्कार विषयी भूतं यद्यत्वं तत्तद्
भेदकूटवद्भवतीति सामान्य मुखी व्याप्तिः अनुमान प्रयोगस्तु
त्वकार विषयक साक्षात्कार विषयककारः स्वविषयक साक्षात्का-
राजनकजन्य साक्षात्कार विषय त्वकार कत्वेसति स्वविषयक
साक्षात्काराजनकजन्य साक्षात्कार विषयीभूतं यद्यत्वं तद्भेद-
कूटवत्, एकावच्छेदेन स्वसमान देशत्वेसति स्वग्राहकेन्द्रिय
ग्राह्यत्वात् घटैकत्व परिमाणवदेत्यादि क्रमेण बोध्यः अत्रा
जनकत्वं फलानुपधान रूपं ग्राह्यं अतः त्वकार विषयक साक्षा-

त्कार जनक वायु संयोगस्य ककार विषयक साक्षात्कारस्व-
रूपयोग्यत्वेऽपि न मीमांसकनये सिद्ध साधनावकाशः तत्र कथं
तन्नये तथाविध स्वरूपयोग्यत्वमिति तु नाशंकनीयम्।
कदाचित् विजातीय संयोगाभ्यां ककार खकार विषयक
समूहालंबन जननेन तत्र तथाविध स्वरूपयोग्यत्वं संभवात्
एवं च नैयायिकनये बाध वारणाय त्व विषयक साक्षात्कार
विषयत्वस्य पक्षतावच्छेदक कोटौ निवेशः। अन्यथा एकैक
मात्र विषयक साक्षात्कार जनकस्य एकैकमात्र विषयक साक्षा-
त्कार रूपं फलानुपधायकतया बाध वारणस्याशक्यत्वात्।
न चैवं सत्यपि उपदर्शितसामान्यव्याप्तौ घट रत्येक पृथक्त्व-
मादायानित्यत्व हेतु शालिनि घटैकत्वे व्यभिचारः तत्र एकत्व-
विषयकसाक्षात्कारानुपधायकीभूत यत् एकत्व ग्रह प्रतिबंधक
दोषादी कालीन एक पृथक्त्व ज्ञान रूपमकारणं तज्जन्य साक्षात्कार-
विषयत्वस्य एक पृथक्त्वे सत्वेन एक पृथक्त्व ग्रह प्रतिबंधक दोषादि
समवधानकालीनं यत् एकत्व ज्ञान रूप कारणं तज्जन्य साक्षा-

त्कारविषयत्वस्य एकत्वेसत्वेन च निरुक्तसाध्यासत्वादिति-

वाच्यं,, तत्तत्साक्षात्काराजनके तत्तत्साक्षात्कारप्रतिबंधकासमवहित-

तत्वस्यापिनिवेशनीयत्वादिति तथा च यत् एकावच्छेदेन यत्समान-

देशत्वे सति यद्ग्राहकेन्द्रियं तत् स्वविषयकसाक्षात्कारानुपधा-

यकं यत् तद्विषयक साक्षात्कार प्रतिबंधकासमवहितकारणं

तन्निष्ठफलोपधायकता निरूपकसाक्षात्कारविषयतत्कत्वे सति

तद्विषयकसाक्षात्कारानुपधायकं यत् तद्विषयकसाक्षात्कार-

प्रतिबंधकासमवहित कारणं तन्निष्ठफलोपधायकता नि-

रूपक साक्षात्कारविषयीभूतं यद्यत्वं तत्तद्भेदकूटवद् भवतीति

सामान्यमुख व्याप्तिनिष्कर्षः अथ तथाविधकारणनिष्ठफलो-

पधायकतानिरूपकत्वनिवेशात् घटवृत्तिक पृथक्त्वादि साक्षा-

त्कारानुपधायकं यदितर कारणासमवहितात्ममनः संयोगादिकं

तदीय स्वरूपयोग्यतामादाय तथाविधैक पृथक्त्वादौ

निरुक्तपरस्परा व्यंजकव्यंग्यत्वसत्वेपि न क्षतिः। विभिन्नकालीन

पाकजैक घटवृत्ति गंधद्वयैक गंधविषयकसाक्षात्कारानु-

घायकापरगंध साक्षात्कारविषये व्यभिचारवारणायैकावच्छेदेने-

ति। स्वावच्छेदककालानवच्छिन्नतत्कं यद्यत्त्वं तद्भेदकूटवत्त्वार्थ-

कंनात: परन्ये शब्दस्य व्याप्यवृत्तित्वेऽपि हेतु: स्वरूपासिद्ध:

केचित्तु व्याप्यवृत्तेरपि प्रतीतिबलात् कालावच्छेदकत्वाभ्यु-

पमे क्षति विरहात् एकावच्छेदेनेत्यस्य एककालावच्छिन्नत्वे सति

इति यथाश्रुतार्थ एव समीचीन इत्याहु:। एवं च विभिन्नसंस्थान

विशेषव्यंग्ययोर्गोत्वाश्वत्वयोर्व्यभिचारवारणाय समानदेश-

त्वे सतीतिविशेषणं समाननियताधिकरणत्वार्थकं नात एककाला-

वच्छिन्नयोरेकश्येन प्रतियोगिकशाखा संयोगवृक्ष संयोग-

यो: श्येन हयैकदेश वृत्तित्वेऽपि व्यभिचार: न चैवमपि एकका-

लावच्छिन्नश्येन चरणद्वयावच्छिन्न श्येन वृक्षसंयोगयो:

व्यभिचार: तन्न परस्पर विषयक साक्षात्काराजनक परस्परा-

वच्छेदकावच्छिन्न संनिकर्षजन्य साक्षात्कार विषयत्वेन निरुक्त

साध्या सत्वादिति वाच्यं विभिन्नदेशानवच्छिन्नत्वस्यापि

निवेशनीयत्वात्, न चैवं सति समनियताधिकरणतार्थकं समान

देशत्व विशेषणं व्यर्थं उपदर्शितस्थेन प्रतियोगिकशाखा

वृक्ष संयोगयो: शाखाद्यवयवकृक्षावयव रूप परस्पर विभि-

न्नावच्छेदकावच्छिन्नत्वेन तथाविधानवच्छिन्नत्वविशेषणे

नैववारणसंभवादितिवाच्यम्, एवमपि घटावधिक घटकु-

ड्यवृत्ति द्वि पृथक्त्व पटावधिक पटकुड्यवृत्ति द्वि पृथक्त्व-

योरेककालावच्छिन्नयो: स्वस्वावधि ज्ञान व्यंग्ययोर्व्यभिचार-

वारणाय तदुपादानस्यावश्यकत्वात्, न चैवं पक्षधर्मिकृ-

दत्तो ~~प~~ पदर्शितस्थले व्याप्तौविरोध: तावतापन्नते-

रभावात् तद्ग्रंथस्योपलक्षणपरत्वाद्वा । अत्र विभिन्नदेशा-

नवच्छिन्नत्वं स्वावच्छिन्नत्व स्वभिन्न देशावच्छिन्नत्वोभय संबं-

धावच्छिन्न प्रतियोगिताक यत्किंचित् देशाभाववत्वं अतोन

विभिन्नदेशानवच्छिन्नत्वस्य दुर्वचत्वापत्तिरिति । अत्र पक्षता-

वच्छेदक सामानाधिकरण्येनैव साध्य सिद्धेरुद्देश्यत्वान्नैया-

यिकनये विभिन्नदेशावच्छिन्न स्वकार विषयकसाक्षात्कार वि-

षयककार्यहेतोर्भागासिद्धि: । तन्मते समान देशावच्छिन्न-

तथाविधवर्णद्वयमादायैव पक्षे हेतुमत्व संभवादिति । एक-

कालावच्छिन्नयोः किंचिद्देशानवच्छिन्नयोः एकघटवृत्ति रसगंध-

योर्व्यभिचारवारणाय समानेंद्रियग्राह्यत्वादिति तद्ग्राह-

केंद्रियजन्य लौकिकसाक्षात्कार विषयत्वादित्यर्थः । नात-

स्तत्पुरुषीयापेक्षाबुद्धिजन्य द्वित्व प्रत्यक्षं प्रति तत्पुरुषी-

यापेक्षाबुद्धेर्हेतुत्वोपेक्षाति । न चैवमपि स्वव्यापकज्ञान-

व्यंग्ययो घटवृत्तिकपृथक्त्व दीर्घत्वयोर्व्यभिचार इति वाच्यं

ह्रस्तत्ववित स्तित्वादि रूप दीर्घत्व व्याप्य जाति पुरस्का-

रेण दीर्घत्व ग्रहे व्यापिज्ञानस्य हेतुतया दीर्घत्व रूपेण दीर्घत्व

ग्रहे अवाप्तिज्ञानस्य हेतुत्वानभ्युपगमेनानुपपत्त्यभावादिति ।

अथ वर्णाः प्रतिनियत व्यंजक व्यंग्याः स्वग्राहकेंद्रिया ग्राह्य

लौकिक साक्षात्कार विषयतदाश्रयकत्वात् घटरसगंध-

वदिति सत्प्रतिपक्षसत्वात्रोक्तरीत्या वर्णानां प्रतिनियतव्यंजक

व्यंग्यत्वाभावसिद्धिसंभवति पूर्वोपदर्शित साध्यस्य प्रतियोग्य

वात्र साध्यं पक्षोपि पूर्ववदेव तेन न सत्प्रतिपक्षानुपपत्तिरिति

चेन्न समूहालंबन साक्षात्कार मात्रविषययोर्गंधयोर्व्यभि-
चारेण सत्प्रतिपक्षासंभवात् वस्तुतस्तु वर्णानामुक्तरीत्या नि-
त्यत्वे घटादीनामपि नित्यत्वापत्तिः तत्राप्येकजातीयानां तेषां
घटानामेकत्वस्यानित्यत्वस्य च लाघवेन वक्तुं शक्यत्वात् तत्र दव-
यवसंयोगादिरूप प्रतिनियतव्यंजकव्यंग्यत्वस्य तत्राभ्युपगमे-
नैक घटादिसाक्षात्कार दशायां न सकल घटादि साक्षात्कारा-
पत्तिर्नवा सर्वदोपलंभापत्तिः उत्पादादि प्रत्ययस्यापि शब्द-
स्थलइव भ्रमत्वस्य सुवचत्वात्, अथ तन्नाशत्वेन तत्समवेत
नाशत्वेन कार्यकारणभावात् कपाल नाशेन घटनाशस्य दुर्वार-
तया घटस्यानित्यत्वासंभवः न च जात्यादिनाशवारणाय
स्वप्रतियोगि जन्यत्वस्य नाशकतावच्छेदक संबंधतया घटादेर्नि-
त्यत्वे स्वप्रतियोगिजन्यत्वाविरहादेव न नाश इति वाच्यम्
लाघवात् स्वप्रतियोगिसमवेतत्वस्यैव नाशकतावच्छेदक संबं-
धत्वात्, अनंत घटादि कल्पना गौरवस्य च फलमुखत्वेनादोष-
त्वात् सत्वेन ध्वंसत्वेन नाश्यनाशकभावंतरादेव जात्यादेर-

विनाशोपपत्तेः। अनंतस्थले स्व प्रतियोगि जन्यत्वस्य
नाशकतावच्छेदक संबंधत्वकल्पनामपेक्ष्यातिरिक्तैक
नाश्यनाशकभावकल्पनाया लघुत्वादिति चेन्न, व्यक्ति
कल्पनास्थले फलमुखगौरवस्यापि दोषत्वात्, तुल्ययुक्त्या
कपालकपालिकादेरपि नित्यत्वस्य सुवचतया तन्नाशेन घटादि
नाशापत्त्यसंभवादिति दिक्। तस्माद् वर्णानामनित्यत्वासिद्धेर्वेद
नित्यत्वमूलक एव मीहितः कुमारः अथ मास्तु ध्वंसाप्रतियोगित्व
रूपं नित्यत्वं वेदस्य तथापि परतंत्र रूप परंपराधीनतया प्रवा-
हावच्छेदरूपेनित्यत्वे बाधकमावः एवं च नित्यत्वेन निर्दोषतया
च वेदप्रामाण्यसिद्धौ सर्वज्ञे वेदवक्तरि ईश्वरे प्रमाणाभावेनो-
क्तरीत्या वेदस्यपौरुषेयत्वासिद्धिरिति चेन्न स्मृत्याचारानुमित
वेदानामुच्छेददर्शनेन तद्दृष्टांतेन सर्ववेदा उच्छिद्यंते वेदत्वात्
स्मृत्याचारानुमितवेदवदित्यनुमानेन सर्ववेदानामुच्छेदे सिद्धे
सजातीयध्वंससमव्यापक प्रागभावप्रतियोगित्वरूपप्रवाहा-
विच्छेदस्यासंभवात्, तस्मादेतत् स्मृत्याचारानुमितवेदा-

नानुच्छेद एव। सिद्धिस्तेषां नित्यानुमेयत्वात् प्रवाहवि-
च्छेदेपि सर्वदा तुल्यरूपता। सा च कालोपाधित्वाव्यापका-
ध्ययन विषयत्वानवच्छिन्नत्वं तच्च सर्वदाध्ययनविषये
प्रत्यक्षवेदेऽध्ययनाविषये नित्यानुमेयवेदे चास्ति अनु-
मानं च विवादपदं पूर्वबोधिका स्मृतिः स्वार्थानुभवजनकवेद
मूला अविगीतमहाजनपरिगृहीतस्मृतित्वात् प्रत्यक्षवेदमूलकस्मृतिवत्।
अत्र प्रत्यक्षवेदमूलकांशतः सिद्धसाधनवारणाय विवादपदमिति
तदर्थस्तु इदानीं प्रत्यक्षवेदामूलकत्वेऽपि तदुपरते प्रमाणत्वं दृष्टु-
पर्यांशत इति न्यायमूलकस्मृतावंशतो बाधवारणाय पूर्वबोध-
केति" वस्तुतो विवादपदत्वं उभयवादिसिद्धान्यतरकोटिकात्वं
एवं च न्यायमूलकस्मृतेरप्यनेनैव वारणेऽपूर्वबोधकत्वं न
देयमेव हेतावविगीत पदं संक्रान्तौ यूपे यूपं हस्तिनोवद्ध्वा
इत्यादि लोभमूलक स्मृतौ व्यभिचारवारणाय तच्च प्रमाणपरं
प्रागुक्तन्यायमूलक स्मृतौ व्यभिचारवारणाय महाजनेत्यादि
तच्च लौकिक प्रमाणाविषयार्थकम्, वेद एव व्यभिचारवार-

णाय स्मृतीति तच्च स्मृतित्वेन प्रसिद्धार्थकम्, वस्तुतो
मन्वादिप्रणीतत्वमेव स्मृतित्वं एवं च लोभमूलकस्मृतौ
व्यभिचारवारणायाविगीतैरिति न देयं साध्ये वेदमूलत्वं
स्वजन्यानुभवद्वारा वेदजन्यत्वं पदार्थो ज्ञानादिव्यवहितस्य
कुविंदादेरिव स्मृतावपि ज्ञानादिव्यवहितस्य वेदस्य
जनकत्वान्नवाधसंभावना तादृश जनकत्वं चाज्ञातस्याप्य-
स्य न संभवतीति पक्षधर्मतावलान्नित्यानुमेय प्रच्छन्नवेद-
सिद्धिः अध्ययनविषयावेदत्वस्य सार्वादिकाध्ययनविष-
यत्वव्याप्यत्वेन व्यापकाभावादध्ययन विषयत्वस्यतभा-
संभवात् अथ यथा मौनिनाश्लोकादिकं कृत्वालिप्यादि
नाऽन्येभ्यः प्रतिपाद्यते तथेश्वरेणापि स्वाभिप्रायस्थोऽपि वेदः
स्मृतिकर्तृभ्यो मन्वादिऋषिभ्यो लिप्यादिना प्रतिपाद्यते,
नंतरं च तैस्तस्मादर्थं प्रतीत्यस्मृतयः प्रणीयंत इति कदा-
ऽप्यध्ययनाविषयत्वाभावेऽपि वेदात् स्मृतिप्रणयनं संभ-
वतीति न पक्षधर्मतावलादपि नित्यानुमेयवेदसिद्धिस्संभ-

वतीति चेन्न वेदस्य उच्चारणाद्यभिव्यक्तानुपूर्वीमत्वतच्छून्य-
त्वाभ्यां द्विविधतया तन्नानुपूर्वीकल्पने गौरवेणाद्यविधयाऽसं-
भवेन द्वितीयविधायामेव पर्यवसानेन मौनिश्लोकादिवैष-
म्यात्, न च तर्हि तस्यानुपूर्वीहीनस्य कथं बोधकता संभवः
आनुपूर्वीत्वेन ज्ञानस्य शाब्दबोधसामग्रीघटकत्वात्, अन्यथा
नदीदीनजरराजेत्यस्या विशेषेण बोधकतापत्तेरिति वाच्यम्
तदर्थज्ञापकत्वेन ज्ञानघटितसामग्र्या एव प्रकृते शाब्दबोध
जनकत्वोपगमेन स्मृत्यानुभावकत्वेन ज्ञातादेव वेदादर्थप्रतीति
संभवेन बोधकतासंभवात् न चैवं स्मृत्यर्थबोधकत्वेन वेदानु-
मितौ स्मृत्यर्थस्य विषयतया तद्बोधकवेदस्यानुवादकतापत्तिरिति
वाच्यं, कार्येण कारणानुमाने कारणकारणतावच्छेदकानुमिती-
त्यस्य व्याप्तिज्ञानविषयव्यापकतावच्छेदकस्य विशेषणत्वेऽपि
न विषयत्वमिति तत्सिद्धान्तात् पाककर्तौ मानसप्रत्यक्षायां
पाकस्य तत्रोपनीतस्य सांज्ञिज्ञाने संज्ञायाश्च ज्ञानान्तरोपनीताया
विशेषणत्वेऽपि न विषयत्वमिति तैरङ्गीकारात्, न च विशे-

षणत्वस्य विषयतात्मकत्वेन विषयत्वाभावे कथं विशेषणत्व

मितिवाच्यं, विशेषणत्वस्य भासमान धर्मतात्मकत्व रूपतया

ज्ञानांतरोपनीतस्य संसर्गतया धर्मत्वभाने तद्विशेषणत्वस्य

ज्ञाने तद्विशेष्यज्ञानत्वस्य च संभवात् न च ज्ञानांतरोपनीत-

स्य वेदार्थस्यानुमिति विषयत्वे वेदस्यानुवादकतापत्तिरि-

ति वाच्यं, वेदार्थ ग्राहकस्य ज्ञानांतरस्य स्मृतिजन्यतया प्रमा-

णांतरत्वभावेन प्रमाणांतरा गृहीतार्थ ग्राहकत्व रूपानुवादक-

त्वाभावात्, अथ कदाप्यपठितस्य वेदत्वं न संभवति उत्पत्त्य-

भिव्यक्ते मौनिश्लोकवदभिप्रायाज्ञातत्वे पर्यवगमा संभवात् आनु-

पूर्वीहीन वर्णमात्रस्यैव निरर्थकत्वात्, न चानुपूर्वी सहितस्यैव वेद-

स्यानुमानानात्र दोष इति वाच्यं तस्यानानात्वेन विशिष्यज्ञाना-

संभवादिति चेन्न हस्तकराद्यि पदानां घरमानय कलशमानया-

नय घटमित्यादीनांच प्रत्येकं व्यभिचारेण शाब्दबोधे पदानां

वाक्यानां चानुपूर्वीज्ञानस्या हेतुत्वात्, किंतु तत्तदर्थ ज्ञाप-

कत्वेनज्ञानमेव तत्र हेतुः तच्च प्रकृतेप्यस्ति तदर्थमेव च

क्वचिद्वर्णविरक्रमविशेषाणामुपयोगः अतएव कुशमानये

त्यादौ शकार संदेहे विपानुच्चारणे वा हस्तकरादि संदेहेऽपि

शाब्दबोधः अत एव दृष्टं चास्त्यत्र वह्निलिंगमितिशब्दात्-

प्रतीतेन धूमेनालोकेन वा वह्नेरनुमानं ननु तदर्थज्ञाप

कत्वेन ज्ञानात् पदार्थोपस्थितिमात्रं जन्यते न तु वाक्यार्थ

बोधः नामत्वविभक्तित्वादिना ज्ञानं विना कांक्षादि ज्ञाना-

संभवेन तदसंभवात् न च तदर्थज्ञापकत्वेन ज्ञानहेतुता

मते आकांक्षादि ज्ञानस्य न तत्र हेतुतेति वाच्यं, तथा सति

घटः कर्मत्वमानयनं कृतिरित्यादि निराकांक्ष वाक्यादपि

घटकर्मत्वानयन कृतिबोधकत्वेन ज्ञानेऽपि घटमानयेत्यादि

वाक्यादिव शाब्दबोधापत्तेः एवंच कर्मत्वाद्युपस्थापक विभ-

क्त्यादि मद्विशेषत्वादिना ज्ञानं विनातदर्थ ज्ञापकत्वज्ञान

मात्रात्कथं शाब्दबोधः नचैवं कुशमानयेत्यादौ शकारादि

संदेहे कथं शाब्दबोध इति वाच्यम्, तत्रापि सामान्यतस्तथा

ज्ञान सत्वात् अननुगमेन तत्तद्विभक्त्यादि मद्विशेष ज्ञानत्वादिना

हेतुत्वासंभवात् घट: कर्मत्वमित्याद्यवयविरोधे पदाजन्यो पास्थितित्वादिनैव हेतु तत्र हेतुत्वात्. वस्तुतस्तु नानापदजन्य पदार्थोपास्थित्या यत्र शाब्दबोधस्तत्रैवानुपूर्वीज्ञानस्य हेतुतया विनाप्यनुमितेर्वे दात् शाब्दबोधे बाधकाभाव: न चानुपूर्वी ज्ञानघटितसामग्र्या अन्यत्र शाब्दबोधजनकत्वेन क्लृप्ताया अत्राभावे कथं शाब्दबोध इति वाच्यम्, अत्र तदर्थज्ञापकत्वेन ज्ञानं घटितया धर्मिग्राहकमानसिद्धाया विलक्षणसामग्र्या एव शाब्दबोधजनकत्वोपगमात् न च क्लृप्तसामग्र्याभावेपि विलक्षणसामग्र्यंतरेण कथं कार्योत्पत्तिरदृष्टगोचरत्वादिति वाच्यं तथासति तव घटादिकार्यकर्तु: शरीरापेक्षया जनकत्वस्य दृष्टतया क्षित्यादिकार्ये ईश्वरस्याशरीरिण: शरीरापेक्षां विनैव जनकत्वस्यानुपपत्ते: कार्यवैलक्षण्यात् सामग्रीवैलक्षण्याभ्युपगमे प्रकृतेप्यदोषात् एवं च नित्यानुमेय वेदस्थले वर्णपदविभक्त्यादिविशेषघटितत्वेना ज्ञातस्याखंडस्य वाक्यार्थानुभावकत्वात्तत्र पदार्थस्थानीयो वाक्यार्थ: अस्तु वा खंडस्यैव वाक्या-

र्थानुभावकत्वभावण्डत्वे मोकमाग्रहाभावात् न च तर्ह्यानुपूर्व्या-
नानात्वात् विशेष्यानिश्चये कथं शाब्दबोध इति वाच्यं अत्रविलक्षणा-
या एव सामग्र्याः स्वीकारात् न च कूटहेतुं विना नसोनुभावक इति वाच्यं
तस्यासिद्धावाक्ष्यासिद्धेः सिद्धौ च बाधः तेन विनैवसर्वानुपपत्ति-
परिमूच धर्मिग्राहकमाने न तदनुभावकत्वासिद्धेः अत एव वस्तुति-
निंदाभ्याम कल्पित विधिनिषेध वाक्या त्तर्थं प्रतीत्य प्रवृत्ति निवृत्ती
ती अन्यथाविधिनिषेधकानां नानाविधत्वेन विशेषानुमा-
नासंभवान्नततोर्थधीः स्यात् एवं मंगलाचार धाविगीत शिष्टा-
चारत्वेन कर्तव्यतामनुमाय सा कर्त्तव्यता वेदबोधिताद्लौकिका-
विगीतशिष्टाचार कर्त्तव्यतात्वादिति वेदानुमानं मंगलमाचरेदि-
त्यादि विशेषाकारेण तु न वेदानुमानं तथा व्याप्त्यभावात् न
चास्तु प्रत्यक्षवेदानुमानं प्रत्यक्षवेद उच्छेदानुपपत्तेः प्रत्यक्ष-
शाखावत् पत्वष्टकाः कार्याः कार्याअष्टका इत्येवं रूपमेववाक्य
मनुमेयामिति तत्र नानावेदकल्पने गौरवात्, मन्वादिस्मृति मूलं हि
नानेकविधं हष्टामिति कथमाधुनिकोनेकवेदमनुमिनुयात् न च

स्मृत्यर्थबोधको वेदः स्मृतिसदृश एवानुमेयः स्मृतेर्नानाविध-
त्वात् तस्य च प्रदोषादावनुच्चरितस्यैव वेदत्वं श्रोत्रग्रहणाहि
तथा शब्दत्वं वाच्यत्वमर्थबोधकत्वादित्यस्तु स्मृत्याचाराभ्यां
चानुमितो वेदार्थं बोधयतीति एवपूर्वेणानुमित वेदात्तदुत्तरो-
त्तर स्मृत्याचाराविति नांध ~~परंपरा स्वतंत्रप्रामाण्यमूलकत्वात्~~
तस्माद्वेदस्य नित्यानुमेयत्वं न तूच्छेद इति । उच्छिन्नवेदार्थं प्रतीत
स्मृत्याचारयोरुपपत्तेः सामग्र्यंतरकल्पने मानाभावः । अतएव
नाश्रयासिद्धिर्नवा बाधः स्मृत्याचारानुमितस्य तस्यास्माभिरप्युप-
गमात् । परास्वतंत्र प्रमाणमूलकत्वात् ~~प~~ न च तस्मात्कथं
बोधः आनुपूर्वीसाहित्यात्, न च तत्प्रमाणाभावः यदि स वेदा-
आनुपूर्वीरहितः स्यात्तदा ननुभावकस्यादिति तर्कसहकृतानुमान-
स्यैव मानत्वात्, एवं च स्मृत्याचारयोर्वेदजन्यानुभवमूलकत्वानुमा-
नादेव पक्षधर्मताबलात् प्रत्यक्षवेदमूलकत्वसिद्धिः अन्यथानुमा-
नत्वाभावेन तस्य मूलत्वानुपपत्तेः तस्मात् स्मृत्याचारानुमितो
वेदः प्रत्यक्षाध्ययनाविषयः वेदत्वात् संमतवत् उच्छेदस्त्वाधु-

निकानामहरहरपचीयमानशक्तिकत्वात् स्तुतिनिंदावाक्याभ्यां
च प्रवृत्तिनिवृत्तिपराभ्यां प्रवृत्तिनिवृत्तिहेतुतार्थ एव कल्प्यते
न तु विधायकं निषेधकं च वाक्यं गौरवादुक्तदोषाच्च. यत्र
चार्थवादादेव तदर्थावगमस्तत्र न तत्कल्पनापि यथा तरति
मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजत इत्यादौ न च तस्या
ध्ययनविषयत्वे वहुभिर्मेधाविभिः परिणसंभवेन कथमु-
च्छेद इति वाच्यं एकस्य सकलशाखाध्ययने सामर्थ्याभावात्
एकेन वा परेणापि तदध्ययनेन शाखोच्छेदसंभवात् शाखात्व-
स्यैव प्रत्यक्षशाखात्वस्यापि सार्वादिकाध्ययन विषयत्वव्याप्यत्वे-
मानाभावात् न च सहस्रशाखावेदविदां व्यासादीनां सत्त्वात्कथमुच्छेद
इति वाच्यम् अध्ययनाभावस्यैवोच्छेदपदार्थत्वात् अथ शाखो-
च्छेदे वर्णपदवाक्यहानिशंकया प्रत्यक्षवेदादपि वाक्यार्थ
प्रयोगयोरनिश्चये वैदिकव्यवहारमात्रविलोपापत्तिरिति चेन्न
श्रूयमाणवेदस्यैव महाजनपरिग्रहेण तन्मूलकानुष्ठानसंभवात्
एतेन सर्वत्रोच्छिन्नशाखाबोधितांगकतासंदेहेन सर्वथा नाश्वासे

प्रसंग इत्यपि निरस्तम् सति चानेकशाखाबोधितेन तत्तत्कर्मणि
कर्तव्यता बोधिका मन्वादिस्मृतयः कालक्रमभाविनमेता-
दृशमनाश्वासमाशंक्यैव तैस्तत्तत्स्मृति प्रणयनात् न च स्मृ-
त्याचारयोः महाजनपरिग्रहादेव प्रामाण्यमस्तु किं वेदेनेति
वाच्यं, प्रलये स्मृत्याचारयोरुभयोरेवोच्छेदात् सर्गादौ नित्य
सर्वज्ञेश्वर प्रणीत वेदमूलकत्वस्य स्मृत्याचारयोरावश्यकत्वात्
अन्यथा मूलाभावेनान्धपरंपरायात प्रसंगात् मन्वादीनां तदाना-
तीन्द्रियदर्शित्वं तदुपाय श्रवणाद्यभावात् पूर्वसर्गसिद्ध सार्वत्यक-
त्पने प्रतिसर्गं तेषामन्यान्यत्व कल्पने च गौरवं एकस्यैव नित्य
सर्वज्ञस्य कल्पनाया औचित्यात् न चेश्वर प्रणीताः स्मृतय एव
सन्त्विति वाच्यं तासां मन्वादि प्रणीतत्वेन वेदमूलकत्वेन स्मृति-
त्वेव स्मृतेः तदुक्तं प्रतिमन्वंतरं चैषा श्रुतिरन्या विधीयत इति
अत्र विधानमेवान्यत् न त्वानुपूर्वीभेदः तत्तद्दृष्टविशेषे तत्तदानु-
पूर्व्या एव जनकत्वेनानुपूर्वीभेदासंभवात् तस्मात् पूर्वं प्रत्यक्षवेद
मूलावेव स्मृत्याचारौ अग्रे च कालक्रमेणायुरारोग्यबल बुद्धि ग्रहण-

धारणादि शक्तेरहरुपचीयमानत्वात् तदध्ययनाविच्छेदेन शाखो-
त्थ स्मृत्याचाराभ्यामेव कर्तव्यतामधिगम्य प्रवृत्तिः। न च तथापि स्मृतिरेवास्तु वेदस्थला मंगलाचारस्तु ईश्वराचारादेव व्यव-
च्छिदि लिप्यादि संप्रदायवदिति वाच्यं, बहुव्यापारधीरतस्य तत्त्वा।
च्छेदाचारस्य गुरुत्वेन मंगलमाचरेदित्यादि वाक्यस्यैव लाघवेन
कल्पनात् न च मंगलादिपदशक्ति ग्रहार्थमाचार आवश्यक इति
वाच्यं स्वर्गादि पदवद्वाक्यादेव तदुपपत्तेः अतएव वचनमात्रा-
यत्र न प्रवृत्तिस्तत्रैव परीक्षकाणामाचारापेक्षेति न च प्र-
लयादिना उच्छेदो संभावित इति वाच्यं, प्रलये नाहरासी-
न्नरात्रिरासीदित्यादिश्रुत्यनुगृहीतानामनुमानानां प्रमाणा-
तायाः पूर्वमेव व्यवस्थापनात् तस्मादुपदर्शितरीत्येश्वर
कर्तृकत्वेन वेदप्रामाण्यसिद्धौ बाधकाभावेन वेदपौरुषेयता
सिद्धिरविकलेति कृतमतिशयविस्तरेण सोऽयं शब्दो द्विविधः
विधिरर्थवादश्च विधित्वं च प्रवर्तनार्थ कलिंगादि घटितत्वं,
प्रवर्तनात्वं च प्रवृत्त्यनुकूलव्यापारत्वं प्रवृत्तिजनकज्ञानविषयत्व
पर्यवसन्नं, इत्थं च प्रवर्तना पाले अर्थत्वस्य सर्वसंमततया कृतिसाध्य-
त्वं बलवदनिष्टाननुबंधित्वं इष्टसाधनत्वं च लिङर्थः समुद्रपार
गमनादौ कलंजभक्षणादौ चैत्यवंदनादौ च प्रवृत्त्यनुत्पत्त्या-

तत्तादितय ज्ञानस्यैव प्रवर्तकत्वात् । पुष्पवंतादि पदस्य सूर्यचंद्रयोरिव लिङाख्यिर्धकशक्तेरुपगमान्नैकादिलिङाख्यितय- बोधकत्वानुपपत्तिः अथ कृतिसाध्यत्वे लिङोन शक्तिः लाघवेन साध्यता संबंधेन कृतिप्रकारकज्ञानस्यैव प्रवृत्तिजनकतोपगमे- नाख्यातत्वे नाख्यात सामान्यशक्त्योपस्थापितायाः कृतेस्साध्य- तासंबंधेन पाकादावन्वयोपगमेनैव पचेतेत्यादौ प्रवृत्तिसंभ- वात् कृत्य साध्ये तादृशज्ञानाभावेन प्रवृत्त्यसंभवाच्चेतिचेन्न, आख्यातत्वस्यैकस्यानुगतस्याभावेनातिह्यतस्त्वादेरेव शक्ति- तावच्छेदकतया लिङ्त्वावच्छिन्नस्य कृतिसाध्यत्वत्वावच्छिन्ने एव शक्तिकल्पनात् , न च लिङ्त्वावच्छिन्नस्यापि लाघवात् कृतित्व मेव शक्यतावच्छेदकमास्तामिति वाच्यं, पदान्नियतोपास्थितेर्कृति साध्यत्वेन यत्पदात् यादृशधर्मप्रकारेणान्वियतोपास्थितिस्तादृशधर्म- स्यैव तत्पदशक्यतावच्छेदकतयानुभवानुरोधेन लिङः कृतिसाध्यत्व- त्वावच्छिन्ने शक्तिकल्पने गौरवस्याकिंचित्करत्वात् , अन्यथा वेद पद स्वर्गपदादेरपि गुरुधर्मावच्छिन्ने शक्तिविलोपापत्तेः पचतीत्या-

दावाख्यात सामान्य शक्त्युपस्थाप्य कृतेर्धात्वर्थ विशेष्य-
त्वेनैवान्वयस्य व्युत्पन्नतया पचेतेत्यादौ तस्याधात्वर्थ
विशेषणतयान्वया संभवाच्च। न च व्युत्पत्ति भेदाङ्गीकरणा-
न्नदोष इतिवाच्यं। व्युत्पत्ति भेदस्य शक्ति भेदानिर्वाह्यतया
शक्तिभेदस्यावश्यकत्वे उक्तरीत्या कृति साध्यत्वत्वावच्छिन्न एव
तदौचित्यात्, अथमास्तु कृति साध्यत्वे लिङः शक्तिः कृत्य साध्ये
प्रवृत्तिवारणं तु कृति साध्यत्वज्ञानस्य प्रवृत्ति हेतुत्वकल्पनादे-
व सुलभं न च प्रवर्तकज्ञानस्य विधिजन्यत्वनियम निर्वाहाय
लिङस्तत्र शक्तिरावश्यकीति वाच्यं तत्र लिङः शक्त्यंगीकारेऽपि ता-
दृशानियमानिर्वाहात्, तथाहि इदानीं तनकृत्य साध्ये कालांतरीय
कृति साध्ये भावियौवराज्यादाविदानीतं नकृत्य साध्यता ज्ञानद-
शायामपि कालांतरीय कृति साध्यता ज्ञान सत्वात् प्रवृत्यापत्तिः एवं
स्व कृत्य साध्ये हनुमदादि पुरुषांतरीय कृतिसाध्ये समुद्रोल्लंघनादौ
स्वकृत्यसाध्यता ज्ञान दशायामपि हनुमदादि पुरुषांतरीय कृतिसाध्यता
ज्ञानात् प्रवृत्यापत्तिरिति तत्तत्कालीन तत्तत्पुरुषीय प्रवृत्तिं प्रति तत्तत्का-

लीन तत्तत्पुरुषीय कृतिसाध्यताज्ञानस्यैव हेतुत्वं वाच्यं तथा च
तादृशज्ञानस्य न विधिजन्यत्वं तत्तत्काल तत्तत्पुरुषीयत्वेन कृति
साध्यत्वे लिङः शक्त्यभावादिति चेन्न प्रवर्तकज्ञानस्य विधिप्रयो-
ज्यत्व नियम निर्वाहायैव लिङस्तत्रशक्ते कल्पनात् विधिना सा-
मान्यतः कृतिसाध्यत्वे बोधिते अनुमानादिना प्रवर्तकस्य तत्तत्काली-
न तत्तत्पुरुषीय कृतिसाध्यता ज्ञानस्य संभवात्, वस्तुतस्तु यद्वि-
शेषयोरितिन्यायेन सामान्यतः प्रवृत्तौ कृतिसाध्यता ज्ञानत्वेन
केवलकृति साध्यता ज्ञान हेतुत्वस्याप्यावश्यकतया केवलकृतिसा-
ध्यता ज्ञानस्यापि प्रवृत्ति जनकतया प्रवर्तकज्ञानस्य विधिजन्यत्व
नियम निर्वाहायैव लिङः कृति साध्यत्वे शक्तिरावश्यकीतिसारं,
तच्च कृतिसाध्यत्वादिज्ञानम् चिकीर्षाद्वारा प्रवृत्ति जनकं, प्रवृत्ति
जनकमुपाय विषयकं ज्ञानं चिकीर्षाद्वारकमिति नियमात्, प्रवृत्त्य
जनके उपायज्ञाने व्यभिचार वारणाय प्रवृत्ति जनकमिति फलज्ञाने
उपादान प्रत्यक्षे च व्यभिचारवारणायोपाय विषयकमिति उपायत्वं
च साध्यताख्य विषयताशालित्व मतो नोक्तस्थले व्यभिचारः अतस्त

मानिकृतापि ज्ञानस्य कृतौ जन्यायां चिकीर्षातिरिक्तं न कर्तव्यमस्ति-

इति ग्रन्थेन तथैवोक्तम्, अत्र चिकीर्षातिरिक्तम् न कर्तव्यमस्ती-

त्य चिकीर्षाद्वारकत्वमेवार्थः न तु चिकीर्षातिरिक्ता द्वारकत्वं अनु-

पयोगात् चिकीर्षाद्वारकत्व सिद्धैव चिकीर्षाजनक कृतिसाध्य

तादि ज्ञानस्य प्रवर्तकत्वासिद्धेः मिध्यास्तु ज्ञानस्येति साक्षादसाधन-

स्योपाय विषयस्य चेत्यर्थः तेन प्रवृत्ति विषय प्रत्यक्षे फलज्ञाने

च न व्यभिचारः प्रवृत्तिं प्रति उपादान प्रत्यक्षस्य हेतुतयात्र

व्यभिचारात् साक्षादसाधनत्वं एवं फल ज्ञानस्य प्रवृत्ति हेतुत्वेनैव

तत्र व्यभिचार वारणायोपाय विषयस्येति विशेषणीयमिति तस्या-

शयः नन्विदमसंगतं चिकीर्षातिरिक्तं न कर्तव्यमस्तीत्यस्य चिकी-

र्षातिरिक्ता व्यापारकत्व वा चिकीर्षावश्यं व्यापार [illegible] तिवा-

र्थः आद्ये उपादान प्रत्यक्षस्य प्रवृत्तिं प्रति साक्षात्साधनस्य निर्व्यापा-

रतया चिकीर्षातिरिक्ता व्यापारकत्वमस्त्येवेति व्यभिचाराभावा-

त् साक्षात्साधनस्येति व्यर्थं द्वितीये फलज्ञानं फलेच्छा इष्ट

साधनता ज्ञानं चिकीर्षात्मिका उपायेच्छा ततः प्रवृत्तिरिति प्रणा-

न्या। चिकीर्षावश्यं व्यापारो भवत्येवेति तद्वारणाय उपाय विषय-
स्येत्युपादानमर्थकम् फलज्ञानस्य प्रवृत्तिं प्रति हेतुत्व वादिना चिकीर्षा-
या अवश्यं व्यापारत्वोपगमात् अत्र उपादान प्रत्यक्षस्य निर्व्यापा-
रकत्वादेव चिकीर्षारूपानियता व्यापारकत्वात्तत्र व्यभिचार वार-
णाय साक्षादसाधनेत्यस्य सार्थक्यं संभवत्येव। तथाचैकतरार्थे
क्रियमाणेऽन्यतर पद वैयर्थ्यमेवेति कथमेतत् सेयमुभयतः पाशारज्जु
रिति। अत्राहुः। चिकीर्षावश्यं व्यापार इत्यस्य स्व समानविशेष्यक
चिकीर्षाऽवश्यं व्यापार इत्येवार्थः उपादान प्रत्यक्षस्य निर्व्यापारक-
तया चिकीर्षारूपव्यापारकत्वाभावात् साक्षादसाधनस्येति। फलज्ञान-
स्य चिकीर्षाव्यापारकत्वेऽपि स्वसमान विशेष्यकचिकीर्षाव्यापार-
कत्वाभावाद् व्यभिचारवारणाय उपाय विषयस्येति सार्थकमिति
यद्वा चिकीर्षातिरिक्ताव्यापारकत्वमेव तदर्थः नवीननैयायिक
नये चिकीर्षाविषय साधनतया उपादानप्रत्यक्षस्य उपादानेच्छा।
व्यापारकत्वोपगमात् चिकीर्षातिरिक्त उपादानेच्छाव्यापारकत्वात्
तत्र व्यभिचारवारणाय साक्षादसाधनस्येति न च तस्य उपादानेच्छा।

व्यापारकत्वे साक्षादसाधनत्वमस्त्येवेति कथं व्यभिचारवार-
णायमिति वाच्यम्, उपादान प्रत्यक्षशून्यकाले प्रवृत्यभावेन तस्य
स्वातंत्र्येणापि हेतुत्वोपगमात्, इत्थं च तत्तत्कृतेः साक्षादसाधन-
त्वे सति तत्तत्कृति जनक तत्तत्कृत्युपाय विषयकज्ञानत्वस्य व्यापकं
चिकीर्षातिरिक्तं तत्तत्कृतिव्यापाराजनकत्वमिति अस्मिन्कल्पे
मूलार्थः पूर्वकल्पे तु स्वसमान विशेष्यक चिकीर्षाव्यापारकत्वं
तादृश ज्ञानत्व व्यापकमिति मूलार्थोऽवसेयः तेन फलस्य कृती-
च्छिदुपायत्वेपि न दोष इति दिगिति वदंति तच्चिन्त्यम्, स्वसमान
विशेष्यकत्वं प्रवेश्य फल ज्ञाने व्यभिचार वारणाय विशेषणांतरो-
पादानस्य वैयर्थ्यात्, एवं उपादान प्रत्यक्षस्य उपादानेच्छा व्यापारकत्वे
प्रमाणाभावेन च द्वितीयकल्पोपि संगत एवेति वस्तुतस्तु अनन्यथासि-
द्धान्वय व्यतिरेकाभ्यामेव कृतिसाध्यत्वादिज्ञानस्य चिकीर्षाद्वारा प्रवृत्ति
जनकत्वमिति सारं, अथ कृतिसाध्यतादि ज्ञानस्य चिकीर्षा प्रवृत्त्यो
हेतुत्वे मानाभावः कृत्यसाध्यतादि ज्ञान काले चिकीर्षा प्रवृत्त्यो
र्वारणाय तत्र कृत्यसाध्यतादि ज्ञानाभावस्य हेतुत्वे नैव निर्वा-

इति, न च य यत्प्रकारकेच्छा सा तत्प्रकारकज्ञानासाध्येति नियम-

बलात् चिकीर्षां प्रति कृतिसाध्यताज्ञानस्य हेतुत्वासिद्धौ चिकीर्षाद्वारा

कृतिसाध्यताज्ञानस्य प्रवृत्तिहेतुत्वसिद्धिरिति वाच्यम्, कृतिसाध्यत्वे-

न पाकमिच्छामि इति चिकीर्षानुभवेन तस्याः कृतिसाध्यत्व

प्रकारक कृतिसाध्यपाकादिक्रिया विशेष्यकेच्छात्वेन तत्रोक्त

युक्त्या कृतिसाध्यत्वप्रकारक पाकादिविशेष्यक ज्ञानस्य हेतुत्वसि-

द्धावपि तत्र बलवदनिष्टाननुबंधित्व प्रकारक ज्ञानस्येष्टसाधनत्व

प्रकारक ज्ञानस्य च हेतुतायास्तथा प्यसिद्धेरिति चेन्न कृत्यसाध्यता-

ज्ञानाभावादेस्तत्वेन तत्र हेतुत्वे तदवच्छेदक गौरवापत्या कृति

साध्यता ज्ञानादेरवतत्वेन तत्र हेतुतायाउचितत्वात्, किंच जनकी

भूतज्ञानं विघटयत एव ज्ञानस्य प्रतिबंधकत्वमिति नियमबलात्

तत्र कृतिसाध्यतादि ज्ञान हेतुता सिद्धिः तादृश नियमश्चस्तु

यत् यत्प्रतिबंधकज्ञानं भवति तत् तज्जनक ज्ञानविघटकमपि भवति

यथा व्यभिचार ज्ञानमनुमिति प्रतिबंधक ज्ञानं भवति तत् अनुमिति

जनकव्याप्तिज्ञान विघटकमपि भवतीति एवं च तादृशनियमेन कृत्य-

साध्यताज्ञानादेश्चिकीर्षा प्रतिबंधकज्ञानत्वेन हेतुता चिकीर्षाजनक

ज्ञानविघटकत्व साधने पक्षधर्मता बलात्कृतिसाध्यतादिज्ञानादेव

चिकीर्षाजनकत्वसिद्धिः। यद्यपि जनकज्ञान विघटकत्वेन्यथासिद्ध-

त्वयातदभावस्याहेतुत्वात्स्वरूपासिद्धि दृष्टांतासिद्धिश्च तथापि

प्रतिबंधकत्वं न कारणीभूताभाव प्रतियोगित्वं किन्तु प्रयोजकीभूता

भाव प्रतियोगित्वं प्रयोजकत्वं च कारणतत्कारणसाधारणमित्यदोषः

हेतौ ज्ञानपदोपादानम् च विषयांतर च संचरादौ व्यभिचार वारणाय

साध्ये ज्ञान पदं च स्वरूपकथनं न तु साध्य प्राविष्टम् प्रयोजनाभा-

वात् व्यापके व्यर्थ विशेषणत्वस्या दोषत्वात् विघटकत्वं च

प्रतिबंधकत्वं, ननु तथापि बाधासिद्ध्यादौ व्यभिचारः न च तद्व्या

वृत्त प्रतिबंधकता हेतौ निवेशनीयेति वाच्यं, कृत्य साध्यताज्ञान

व्यभिचार ज्ञानाभावयोरपि बाधाभाव तयैव चिकीर्षानुमित्योः

प्रयोजकतया स्वरूपासिद्धि दृष्टांतासिद्ध्योरापत्तेरिति चेन्मैवम्,

यादृशज्ञानं संशय निश्चय साधारण्य ज्ञानत्वेन यत्र प्रतिबंधकं तत्र तज्जन

कीभूतज्ञानं विघटयदेव प्रतिबंधकमिति नियमः बाधासिद्ध्यादेसंश

य साधारण ज्ञानत्वेना प्रतिबंधकत्वात् न तत्र व्यभिचारः नापि

सिद्धत्वज्ञानं संशयं साधारण ज्ञानत्वेनेच्छा प्रतिबंधकं तत्संशये -

पीच्छा दर्शनादिति न तत्रापि व्यभिचारः न च सिद्धत्वसंशये बहु-

वित्र व्याप्या तत्साध्येनेच्छेति सिद्धत्व ज्ञानस्य संशय साधारण -

ज्ञानत्वेन तत्र प्रतिबंधकत्वाच्चानिश्चयस्या हेतुतया साध्यासत्वात्

द्व्यभिचारोस्त्येवेति वाच्यं, तत्रापि बलवदनिष्टा ननुबंधित्व -

निश्चय विघटकतया साध्यसत्वात् न चैवं कृत्यसाध्यता संशयोपि

न प्रतिबंधक इति स्वरूपासिद्धिरिति वाच्यम्, तस्य प्रवृत्तिमात्रा

प्रतिबंधकत्वेपि निष्कंप प्रवृत्तौ तथात्वात्, न चैवं निष्कंप प्रवृत्तौ ति

तस्य हेतुत्वासिद्धावपि प्रवृत्ति मात्रे हेतुत्वेन सिद्धमिति वाच्यम्, -

यद्विशेषयोरितिन्यायेन प्रवृत्ति सामान्ये तस्य हेतुत्वसिद्धेः

न च तात्पर्य संशये शाब्द प्रतिबंधके व्यभिचारः मणिकारनये -

तात्पर्य निश्चयस्य शाब्द ~~बुद्धि~~ बुद्धावहेतुत्वादिवाच्यं, प्रतिबध्य

समान विशेष्यकत्वस्य ज्ञानविशेषणत्वे नादोषात्, ग्रिज्ञासु -

जनकेति मार्गप्रतीकमादाय साक्षाद विरोधिन इति शेषः तेनबाधः -

प्रतिरोधादौ न व्यभिचार इत्याहुः ते थामयमाशयः। यत्कार्यं प्रति

साक्षादविरोधि यज्ज्ञानं तज्ज्ञानं तत्कार्यजनकीभूतज्ञानमवश्यं

प्रतिबध्नातीति नियमः तथा च बाधादौ साक्षादविरोधित्वा-

भावादेव हेत्वभावान्न व्यभिचार इति नन्वेमपि कृत्यसाध्यता

ज्ञाने चिकीर्षासाक्षादविरोधित्वेन हेतुत्वात् चिकीर्षा जनकज्ञान

विरोधित्वसाधने स्वरूपासिद्धि परैः कृत्यसाध्यताज्ञानस्य

चिकीर्षां प्रति साक्षादेव विरोधित्वांगीकारात् न च ज्ञानाति

रिक्त कार्यविरोधित्वमेव साक्षाद् विरोधित्वं तथा च बाधादौ

ज्ञानातिरिक्त कार्यविरोधित्वरूप साक्षादविरोधित्वाभावाद्

न व्यभिचारः न व कृत्यसाध्यता ज्ञाने स्वरूपासिद्धिः तत्र ज्ञाना-

तिरिक्तेच्छा विरोधित्व सत्वादिति वाच्यम् अनैकांतिकज्ञानवादिति

दृष्टांतस्य साधनविकलत्वापत्तेः अनैकांतिक ज्ञाने ज्ञानातिरिक्त कार्य

विरोधित्वाभावादिति चेदत्रोच्यते। शेष इत्यस्य ज्ञानस्येत्यस्य

शेष इत्यर्थः इत्थं च साक्षादविरोधित्वं प्रतिज्ञानस्य प्रतिबंधकता

जनक ज्ञान ~~घटक~~ विघटकत्वेनैवेति नियमः पर्यवस्यति साक्षादविरो-

यित्वं च स्वविषयविरुद्ध विषयावगाहिज्ञान भिन्नत्वं तथा च
यज्ज्ञानं स्वविषयविरुद्धनिष्ठप्रकारतावच्छिन्न ज्ञाननिष्ठप्रतिबध्यता
भिन्न यत्कार्य प्रतिबध्यतानिरूपित प्रतिबंधकताकं भवति तज्ज्ञानं
तत्तत्कार्य जनकीभूतज्ञानविरोधी भवतीत्येव नियम: एवं च बाधा-
दौ न व्यभिचार: तत्र स्वविषयविरुद्ध प्रकारतावच्छिन्नज्ञाननिष्ठ
प्रतिबध्यता भिन्नप्रतिबध्यतानिरूपित प्रतिबंधकत्वाभावात् न
वा स्वरूपासिद्धि: कृत्यसाध्यता ज्ञाने तादृश प्रतिबध्यताभिन्न या
चिकीर्षानिष्ठा प्रतिबध्यता तन्निरूपित प्रतिबंधकताश्रयत्वात् न वा
दृष्टान्तस्य साधन वैकल्यं तादृश विरुद्ध प्रकारतावच्छिन्न ज्ञाननिष्ठ प्रति-
बध्यताभिन्न प्रतिबध्यता निरूपित प्रतिबंधकतास्त्वात् स्ववि-
षय विरुद्धत्वं च ग्राह्याभावावगाहित्वया ग्राह्याभावव्याप्याव-
गाहित्वया बाधा स्वनिष्ठ प्रतिबंधकता तन्निरूपित प्रतिबध्यता या:
प्रकारता संबंधेनावच्छेदकता पर्याप्त्याधिकरणं यत्र एवं तेन
व्यभिचारज्ञान विषय विधूमत्वादि विरुद्धत्वस्य वह्न्यादौ सत्वात् ता-
दृश विरुद्धनिष्ठप्रकारतावच्छिन्न ज्ञाननिष्ठ प्रतिबध्यता भिन्न-

प्रतिबध्यतानिरूपित प्रतिबंधकत्वाभावान्न दृष्टान्तस्य साधनवैक-
ल्यमिति नन्वत्र प्रतिबंधकत्वं कारणीभूताभावप्रतियोगित्वं तच्च
दृष्टान्तासिद्धेः अनुमितिं प्रति व्यभिचारज्ञानाभावस्याहेतुत्वा-
दिति चेन्न प्रतिबंधकत्वस्यात्र फलानुत्पत्तिं यत्स्वरूपस्य
ग्राह्यत्वात् तथा च यज्ज्ञानं ग्राह्याभावावगाहितया ग्राह्या-
भावव्याप्यावगाहितया वा यन्निष्ठा प्रतिबंधकता तन्निरू-
पिता यज्ज्ञाननिष्ठ प्रतिबध्यता तदनाश्रय यत्कार्यानुत्पत्ति प्रयो-
जकं भवति तत्कार्यजनकीभूत ज्ञानविरोधि भवतीति नियमः।
प्रयोजकत्वं च एतज्ज्ञानप्रयुक्त एतत्फलाभाव इति प्रतीति सा-
क्षिकः स्वरूपसंबंधविशेषः न च तथापि प्रसिद्धावच्छेदकधर्मदर्शना-
दौ व्यभिचार इति वाच्यं तत्तद्भिन्न व्यक्तित्वविशिष्ट तत्तत्कार्यानु-
त्पत्ति प्रयोजकत्वस्यैव निवेशादिति दिक् अभेदं चिन्त्यं साक्षा-
दविरोधित्वस्य प्रतिबंधकज्ञान विशेषणतया निवेशनैव वाद्यादौ
व्यभिचार वारणसंभवे साक्षादविरोधिनं प्रतीत्युक्त्वा साक्षाद
विरोधित्वस्य प्रतिबध्यविशेषणतामुपगम्य कृतिसाध्यताज्ञानस्य-

चिकीर्षा प्रवृत्ति हेतुत्वोपपादनमसंगतम् । अस्तु वा तस्य प्रतिब-
ध्य ज्ञान विशेषणत्वं तथापि तस्य न स्वविषय विशेष्यकत्वावगाहि-
ज्ञानाभिन्नत्व रूपत्वम् तत्र ज्ञानतांश निवेशस्य व्यर्थत्वात् किंतु
स्वविषय विशेष्यकत्वावगाहि भिन्नत्व रूपत्वमेव तथा च कृत्य साध्यता
ज्ञान पक्षकोपदर्शितानुमाने स्वरूपासिद्धि दुर्वारा चिकीर्षायाः कृत्य
साध्यता ज्ञान विषय विशेष्यक कृति साध्यतावगाहित्वेन कृत्य साध्य-
ताज्ञाने स्वविषयविशेष्यकत्वावगाहि भिन्न निरूपित ज्ञाननिष्ठप्रतिबंधकता
रूपहेतोरभावात् किंचैवं वस्तुतोऽसिद्धत्व धीरिच्छा हेतुरित्यादि ग्रंथ-
दृके ना सिद्धत्व ज्ञानमुपक्रम्य न च तन्नेच्छा हेतुः सिद्धत्व ज्ञानस्य
~~तस्तु~~ तदविरोधित्वोपत्तेः जनकज्ञानाभितिन्यायात् न च वाच्यन्यायः
इच्छाया असिद्धत्वेना सिद्धा विषयतया सिद्धत्व ज्ञानस्य विषय विरोधा
भावादित्यर्थं तनामिकु ग्रंथस्य संगतिः तत्र विषय विरोधाभावादि
त्यस्य बाधादे ~~तद्ग्रंथस्य तात्पर्याभिहितवाच्यं तथास्त्युपदर्शित~~
~~निश्चये~~ ऽपि साक्षात्प्रति बंधकत्वाभावादित्यर्थकतया तद्ग्रंथात् सा-
क्षाद विरोधित्वस्य विशेषणता लाभात् न च तत्र विषय विरोधा-

भावादित्वस्य निश्चयत्वेन प्रतिबंधकत्वविरहादिति दोषः तथा च संशय साधारण ज्ञानत्वेन प्रतिबंधकत्वं जनकीभूत ज्ञान विघटकतया व्याप्यमित्यत्र पूर्वोपदर्शितस्मद्रीत्यानिष्कृ-ष्यार्थे तद्ग्रंथस्य तात्पर्यमिति वाच्यं तथा सत्युपदर्शित नियमे साक्षाद विरोधित्वस्य निवेशाभावे साक्षाद विरोधिन इति शेष इति मिश्र ग्रंथस्याग्रेतन तद ग्रंथेन विरोधे पूर्वापर ग्रंथ विरोध रूप दोषो दुरुद्धर एवेति। किंच कृति साध्यता दिज्ञानस्य चिकीर्षा प्रवृत्ति हेतुत्वमते पाकादि गोचर चिकीर्षादौ कृति साध्यत्वाभाववान्पाक इत्याद्याकारकानुमिति सामग्र्याः प्रतिबंधकत्वं न कल्प्यत इति लाघवं। चिकीर्षादि सामग्री काले पाकत्वादि धर्मितावच्छेदकक कृति साध्यतादि प्रकारक ज्ञा-नस्यावश्यकतया तस्य बाध मुद्रया तादृशानुमिति प्रतिबंधकत्वे न बाधाभाव घटितानुमिति सामग्र्याश्चिकीर्षादि सामग्र्याश्च युगपन्मिलना संभवात्, कृत्य साध्यत्वादि प्रकारक ज्ञानस्य तत्र प्रतिबंधकता मते च तादृश ज्ञानाभाव घटित चिकीर्षादिसामग्र्याः

तादृशानुमिति सामग्र्याश्च मिलन संभवेनोक्त प्रतिबंधकत्व कल्पने महागौरवापत्तिः अत्र कृतिसाध्यत्वादि त्रयस्य लिङर्थत्वेन कलंजं भक्षयेदित्यादौ नञो धात्वर्थ कलंज भक्षणादौ लिङर्थाभावबोधकत्वानुपपत्तिः, कलंज भक्षणादौ कृतिसाध्यत्वेष्ट साधनत्वयोरभावासत्वात्, एवं श्येनेनाभिचरन् यजेतेत्यत्र धात्वर्थे श्येन यागे लिङर्थान्वयासंभवः श्येनस्य नरकानुबंधित्वेन तत्र बलवद निष्टाननुबंधितान्वया संभवादिति चेन्न, आद्ये योग्यतया नञा कृतिसाध्यत्वेष्ट साधनत्वयोरभावबोधनासंभवेन बलवदनिष्टाननुबंधित्वाभावस्यैव बोधनात्, द्वितीये योग्यतया बलवद निष्टाननुबंधित्वान्वया संभवेन कृति साध्यत्वेष्ट साधनत्वयोरेवान्वयांगीकारादिति संप्रदायः वस्तुतस्तु इष्ट साधनत्व मात्रं लिङर्थः कृति साध्यत्वं न लिङर्थः तस्य लिङर्थत्वाभावेपि कृदराख्यातस्य सामान्यार्थतया लिङोपि तदर्थकत्वेन पचेतेत्यादौ कृतेः पाकानुकूलत्व मानस्यावश्यकतया तुल्य वित्ति वेद्य तयार्थात् पाकादावपि कृतिसाध्यता मानात्,

न च प्रत्यक्षे तुल्यवित्तिवेद्यतया मानोपगमेऽपि परोक्षे तदनुपगमान्नोक्त रीत्या कृतिसाध्यता मानं संभवतीति वाच्यं, तथापि साध्यतासंबंधेन कृतिप्रकारकज्ञानस्यैव लाघवेन प्रवर्तकतया व्याख्यातसामान्यार्थ कृतेः साध्यतासंबंधेनैव क्रियायां विधिजन्यज्ञाने भानेन प्रवर्तकज्ञानसंपत्तेः नचेच्छायाः विप्रकार प्रकारकज्ञानजन्यत्वेन चिकीर्षायां कृतिसाध्यत्व प्रकारकज्ञानहेतुत्वस्यावश्यकत्वेन तद्वाराप्रवृत्तावपि तदावश्यकमिति वाच्यं, साध्यतासंबंधेन कृतिप्रकारक क्रियेच्छाया एव चिकीर्षात्वात्, न च पचतीत्यादौ आख्यातार्थ कृतेः क्रियाविशेष तयैव भानमिति व्युत्पन्नेः कृततया पच्यतेत्यादौ तस्याः क्रियाविशेषणतया भानासंभव इति वाच्यं व्युत्पत्ति वैचित्र्येण तदुपपत्तेः न च व्युत्पत्तिभेदस्य शक्तिभेद निर्वाह्यतया शक्तिभेद आवश्यक इति वाच्यम्, शक्त्यभेदेऽपि व्युत्पत्ति भेदबाधकाभावात्। अतएव प्राचीनैराख्यातसामान्यार्थ कृतेः शक्तिभेदं विनैव व्युत्पत्ति भेदेन कर्तृप्रत्ययस्थले क्रियाविशेष्यतया भानं कर्मप्रत्ययस्थले च क्रियाविशेषणतया भानमुपेयते। न च लिङ् प्रत्ययात् कृतिसाध्यत्वावच्छिन्नस्यानियतोपस्थितेरनुभवसिद्धतया तत्र लिङः शक्तिरव-

श्यकीति वाच्यम्, तादृशानुभवे विवादात्, एवं बलवदनिष्टाननु-
बंधित्वमपि न लिङर्थः बहुायाससाध्ये कर्मणि बहुतर दुःखस्यापि
जायमानत्वेन तत्र प्रवृत्त्यनुपपत्त्या तज्ज्ञानस्याप्रवर्तकत्वात्,
अल्पदुःखस्यापि कुतश्चिद् बलवत्त्वेनानुगतानतिप्रसक्त बलवत्त्वस्य
दुर्वचत्वात्, एवं बलवदनिष्टाननुबंधित्वस्य बलवद्द्वेषविषय
दुःखाननुबंधित्वरूपस्य ज्ञानं न प्रवर्तकं कालान्तरीय बलवत् द्वेष
विषय दुःखाननुबंधित्व ज्ञानेपि एतत्कालीन एतत्पुरुषीय तादृश
द्वेष विषय दुःखाननुबंधित्व ज्ञानेन प्रवृत्त्युत्पादादतस्तत्कालीन
तत्पुरुषीय प्रवृत्तिं प्रति तत्कालीन तत्पुरुषीय बलवत् द्वेष विषय
दुःखाननुबंधित्व ज्ञानस्यैव हेतुत्वं वाच्यं तथा यत्काले यत्पुरुषस्य
क्वापि न तादृशो द्वेषस्तत्रा प्रसिद्ध्या तज्ज्ञाना संभवेन प्रवृत्त्यनुपपत्तेः
प्रवर्तक ज्ञान विषयस्यैव लिङर्थतया लिङो नानाशक्ति कल्पनापत्तिश्च
न चैवं कलंज भक्षणादौ प्रवृत्त्यापत्तिरिति वाच्यम् तत्तद्गोचरप्रवृत्तौ
तत्तद्गोचर बलवत् द्वेषस्य प्रतिबंधकत्वेनोक्तापत्त्यभावात्। अत एवान्तरा-
लिकक्रमे यस्य बलवान्द्वेषस्स ज्योतिष्टोमादौ न प्रवर्तते अन्यस्तु प्रवर्तेत

एवेत्युपपद्यते । अथैवं न कलंजं भक्षयेदित्यादौ न ञाकिङर्थाभाव

बोधनानुपपत्तिः कलंजभक्षणादस्तत्वयादि इष्टसाधनत्वेन तद-

भावस्य न ञा बोधनासंभवादिति चेन्न तत्र नञस्तात्पर्यग्राहकतया

निष्टसाधनस्यैव निरुक्तलक्षणया लिङर्थत्वात् न च पूर्वोपदर्शि

तरीत्या सामग्रीप्रतिबंधकत्वा कल्पनप्रयुक्तलाघवेनैव कृति

साध्यत्वादिप्रकारकज्ञानस्य प्रवृत्तिहेतुत्वसिद्धिरितिवाच्यम्, इच्छा-

यां हेतुत्वकल्पे उत्तेजकत्वाभावेन स्थलांतरकृत प्रतिबंधकतयैवो-

पपत्तौ ममापि तादृश सामग्री प्रतिबंधकत्वाकल्पने न लाघवसंभ-

वात् तस्मादिष्टसाधनत्व मात्रस्यालिङर्थत्वे दोषाभावात् स एव

लिङर्थः एतेन कृतिसाध्यत्वादेः यस्य लिङर्थत्वेन कलंजं भक्षये-

दित्यादि निषेधस्थले एकालिङाभिहितानां कृतिसाध्यत्वादि त्रया-

णां मध्ये कृतिसाध्यत्वेष्टसाधनत्वयोर्धात्वर्थे कलंजभक्षणादा-

वेकस्य बलवदनिष्टाननुबंधित्वांशस्य नञर्थेऽन्वयेनैकलिङ प्र-

त्ययाभिहितेषु व्युत्पत्तिवैचित्र्यकल्पनापत्तिः एवं तस्यैवांशस्य

विधिस्थले धात्वर्थान्वायितया कृतस्य निषेधस्थले नञर्थान्वयेन

तत्कल्पनापत्तिः एवं च पचतीत्यादौ नञर्थस्य प्रथमान्त पदार्थेह-

ष्यान्वयस्य प्रकृते धात्वर्थान्वयेन तत्कल्पनापत्तिरिति दूषणोद्भावनं

परास्तं। निषेधस्थलेऽनभिहत तात्पर्य ग्राहकत्वेन निरर्थकत्वात्। अत्र

प्राचीन भाट्टानुयायिनो मीमांसकाः आह चैवं विध्यर्थः। तथाहि

प्रवृत्तिर्हि द्विविधा स्वेच्छाधीना पराधीना च तत्र स्वेच्छाधीन प्रवृत्तौ

स्वेष्टसाधनताज्ञानं पर प्रयोज्य प्रवृत्तौ परनिष्ठप्रवर्तनाज्ञानं च हेतुः

अनिच्छतोऽपि पुत्रादेः राजाज्ञादितः पित्रादीच्छादितौ प्रवृत्ति दर्शने-

न राजा मां प्रवर्तयते इत्याद्याकारक ज्ञानस्यान्वयव्यतिरेकानुविधा-

नात्, प्रवर्तनात्वं चात्र प्रवृत्तिजनकत्वमतिरिक्तं वेत्यन्यदेतत्, एवं

च स्वर्गकामो यजेतेत्यादि विधि प्रयोज्य यागादि गोचर प्रवृत्तेरपि

विधिरूप परप्रयोज्य तयाविधीनिष्ठ प्रवर्तनाज्ञानस्य हेतुत्वमवश्यमुपेयं

तत्र तस्यैव कारणत्वेन क्लृप्तत्वात् तच्चांतरेणाभिधायात्लिङः निष्ठत्व लिङ

र्थत्वेन संभवतीति अभिधाया लिङ्निष्ठत्वं लिङर्थत्वं चावश्यकं आज्ञादि

रूपाया राजादि चेतन निष्ठायाः प्रवर्तनाया अचेतने लिङि असंभवात् इय-

माभिधा शब्दभावना पदवाच्यापि भावनायाश्च शब्दभावनार्थं भावना-

भेदेन द्वैविध्यात्, अथ भावनाया द्वैविध्ये भावनाशंक्यप्रवृत्तीति माह

प्रवादविरोधः, त्रिविधत्वस्यैवांशत्रयरूपत्वादिति चेन्न भावना

ज्ञाने किं भाव्यम्, केन भाव्यं कथं भाव्यम् इत्याकांक्षोदयेन कर्म

करणेतिकर्तव्यतैतत्त्रितयाकांक्षोत्थापकत्वस्यैवांशत्रयवत्त्व

रूपत्वात्, न च भावनाज्ञानोत्तरं तादृशाकांक्षोदये मानाभावइति

वाच्यं, सत्यासति लिङ्पदज्ञानजन्यार्थभावनाज्ञानांतरं या-

गादिगोचरार्थभावनाविशेष्यकस्वर्गादिफलवत्त्वप्रकारक

बोधस्यानुभवासिद्धत्यापलापापत्तेः न चैवं फलाकांक्षासि-

द्धावपि करणाद्याकांक्षासिद्धैवेति वाच्यं, कर्माकांक्षायाः करण

कांक्षानियतत्वेन तस्याः आपि सिद्धेः अतएवेति कर्तव्यताकां-

क्षापि सिद्धा करणाकांक्षायास्तान्नियतत्वात्, अतएव विधिवादे

पक्षधरमिश्रैरप्युक्त अन्यथा स्वर्गादि फलं न भावयेत् तस्यै

तत्त्रितयाधीनत्वादिति अत्र स्वर्गादि फलं न भावयेदित्यस्य

विधिना स्वर्गादिफलकत्वेतार्थभावना न बोध्येतेत्यर्थकतया

तस्यैतत्त्रितयाधीनत्वादित्यस्य च स्वर्गादिफलकत्वादिप्र-

कारकबोधस्यतादृशाकाँक्षा नयाधीनत्वादित्यर्थकितयोक्कार्यलाभा-

त्, ननु लिङ्पदार्थभावनोपस्थितौ तदुत्तरं निःकाकाँक्षात्रयं भवती-

त्युक्तमसंगतम् भट्टमते अभिधाया एवालिङ्पदवाच्यत्वेनेततः फलानु-

कूलव्यापाररूपार्थभावनोपस्थितेरसंभवात्, एवमभिधायाः शब्द

भावनात्वाभावेन तस्याः शब्दभावनात्वाभिधानमप्यसंगतमिति

चेन्न तेषां निरुक्तव्यापाररूपाख्यातसामान्यार्थत्वेन लिङ्पद-

स्यापि शक्यतयाभिधायाः शब्दभावनात्वोपगमेन चोक्तासंग-

त्यभावात्, तदुक्तं भट्टपादैः अभिधाभावनामाहुरन्यामेव लिङा-

दयः। अर्थात्मभावनात्वन्या सर्वाख्यातस्य गोचर इति अत्राभिधा

भावनामित्यस्याभिधीयते इत्यभिधाशब्दः तन्निष्ठा भावना-

मित्यर्थः अन्यां अर्थभावनातो भिन्नां आहुः स्वशक्त्योपस्थाप-

यन्ति अर्थात्मभावनेति अन्यार्थो धात्वर्थो यागादिः कार्यत्वा-

दात्माया आत्मत्वं जनकत्व रूपाविषयित्वं वृत्तित्वं वा एवं च यागादि

विषयिणी आत्मवृत्तिर्वाभावना अर्थात्मभावनाशब्दार्थो बोध्यः

अन्या अभिधारूपशब्दभावनातो भिन्ना सर्वाख्यातस्य गोचर इत्यस्य

सर्वा(ख्यात शक्यैत्यर्थः। अथोक्ताकांक्षात्रय सहकारेणार्थ भावना कर्मकरणेति कर्तव्यता एतत् त्रितयान्विता लिङ्पदेन बोध्यत इत्युक्तं असंगतं अर्थभावनायाः कर्मादीनां विशेष्यापरिचयादिति चेन्न तस्याः स्वर्गादिकं कर्म यागादिकं करणं प्रयाजादि सहकार्यं वेति कर्तव्यतेति प्रसिद्धत्वात् एवं शब्द भावनापि कर्म करणेति कर्तव्यतैतत् त्रितयान्विता लिङाभिधीयते लिङ्शब्दात् शब्द भावनोपास्थितौ सत्यां अस्याः किं भाव्यं किं करणं केति कर्तव्यतेत्याकारके जिज्ञासा रूपाकांक्षोदयात् अस्याश्च भाव्या- यागादि प्रवृत्तिः करणं लिङ्शब्द निरूपित शक्ति ज्ञानं वायुर्वै- क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति सएवैनं भूतिं गमयतीत्यादि स्तुत्यर्थवादः सहकार्यं वेति कर्तव्यतेति च न भाव्यादि परिचयः। तदुक्तं भट्टपादैः लिङोभिधा सैव च शब्द भाव- ना भाव्यं च तस्याः पुरुष प्रवृत्तिः संबंध बोधः करणं तदीयं प्र- रोचना चांगतयोपयुज्यते इति अत्र लिङोभिधेत्यस्य लिङ्वृत्तिरभि- धेत्यर्थः वृत्तित्वं च स्वरूप संबंधेन तत्समवायानंगीकारात् शब्द भावने-

त्यस्य शब्दनिष्ठाभावनेत्यर्थः शब्दनिष्ठाभावना शब्दभावनेति व्युत्पत्तेः भाव्येत्यस्य फलमित्यर्थः संबंध बोध इत्यस्य शक्तिज्ञानमित्यर्थः तदीयामित्यस्य शब्दभावनीयामित्यर्थः प्ररोचनेत्यस्य वायुर्वै क्षेपिष्ठा-देवतेत्यादिस्तुत्यर्थवाद इत्यर्थः अंगतयेत्यस्य सहकारितयेत्यर्थः तदयं भट्टमतनिष्कर्षः स्वर्गकामो यजेतेत्यादौ लिङा आख्यात सामान्यशक्त्या अर्थभावनोपस्थाप्यते तदुत्तरं तत्र कर्मकरणेति कर्तव्यताकांक्षोपदर्शित जिज्ञासा रूपा जायते ततः स्वर्गकर्म-का यागकरणिका प्रयाजादीति कर्तव्यताका स्वर्गकाम कर्तृ-का भावनेत्याकारकार्थभावना विशेष्यक बोधपर्यवसायी स्वर्ग-कामः प्रयाजादि सहकृतेन यागेन स्वर्गं भावयेदित्याकारको बोधः अत्र यागकरणकत्वं न यागनिष्ठकरणता निरूपकत्वं यागे अर्थभावना करणत्वाभावात् किंतु यागनिष्ठ विषयतानिरूपकत्व रूपं पारिभाषिकं तत् विषयत्वं चात्र जन्यत्वं यद्वा यागजन्यफलप्रयोजकत्वं प्रकृते यागकरणकत्वं वस्तुतस्तु स्वर्गोत्पत्त्यनुकूल व्यापार समूह एवात्र स्वर्गकर्म-कार्थ भावनातत्र यागकरणकत्वं च यागघटितत्वमेवेति एकादशकरण-

कत्वं चात्र यागस्य संसर्गमर्यादया भासते न तु प्रकारतया तदुपस्था-

पक पदाभावात् तादृशपदकल्पने गौरवात् न चात्र प्रयाजादेः कथं

शाब्दबोधे सहकृतत्वरूपेति कर्तव्यताकत्व संबंधेन भानं तद्बो-

धक शब्दाभावादिति वाच्यम् यागेति सहकार्याकांक्षायाः प्र-

कारांतरेणानिवृत्तेरन्यथानुपपत्त्या प्रयाजादि पदाध्या-

हारेणैव तादृशबोधोपपादनात् एवं व्युत्पत्तिवैचित्र्येण का-

मनाविशेषणत्वेनोपस्थितस्यापि स्वर्गस्य फलकता संबंधेना-

यागेऽन्वयो बोध्यः । एवं रूपेण लिङ्त्वावच्छिन्नानिरूपितविशेष-

शक्त्या शब्दभावनाया उपस्थितौ किं भाव्यम् केन भाव्यं कथं

भाव्यं इत्याकारका जिज्ञासारूपाकांक्षा जायते ततः पुरुषप्रव-

तिकर्मिका लिङ्शक्तिग्रहकारणीकास्तुत्यर्थ वादेति कर्तव्यताका

विधिनिष्ठा शब्दभावनेत्याकारकशब्दभावना विशेष्यकबोधे पर्यव-

सायी विधिः स्तुत्यर्थवादसहकृतेन लिङ्शक्तिग्रहेण पुरुषप्रवृत्तिं

भावयेदित्याकारको बोधः अत्र विधिवाक्ये यादृशार्थबोधकपदं न

श्रूयते तदर्थकपदं कल्पनयैव बोध उपपादनीयः ततः स्वर्गफलिका-

यागकरणिका प्रयाजादीति कर्तव्यताका स्वर्गकाम कर्तृकार्थ भावना
लिङ्पदनिरूपित शक्तिग्रह करणक स्तुत्यर्थवादीति कर्तव्यताक
विधिनिष्ठशब्दभावनात्मक प्रवर्तना विषय इति महावाक्यार्थबोधः प्रवर्तको
जायते विध्युपरक्ताभावना लिङर्थ इति महासिद्धान्तात्, विधिः प्रवर्तना
तदुक्तपरताद्विशेष्यार्थ भावनालिङः प्रतिपाद्येति तादृशासिद्धान्तोपेवमेवः
न च तादृशासिद्धान्तो निर्युक्तिक इति वाच्यं । पितुः शिरश्छेदं कुर्वित्यादि
राजाज्ञादिस्थले राजाज्ञाविषयस्तादृश शिरश्छेदानुकूलो व्यापार इत्या-
कारकस्यार्थ भावनाविशेष्यक प्रवर्तनाप्रकारक बोधस्य प्रवर्तकत्व-
स्य क्लृप्तत्वे न तदनुसारेण तादृशासिद्धान्तोपगमस्य निर्युक्तिकत्वाभावा-
त् एतेनार्थ निरुक्तार्थ भावनाविषयिणी शब्दभावनेति शब्दभावना
विशेष्यकार्थ भावना प्रकारक एव महावाक्यार्थबोधः । अन्यथावान्तरा-
र्थ भावनाविशेष्यक बोधे भाव्यस्य स्वर्गादेः प्रकारकतयान्वयस्य क्लृप्त-
तया वाक्यार्थबोधे भाव्यार्थ भावनायाः प्रकारतयाभानस्यैवौचित्या-
दिति केषांचिदुक्तिश्चिन्त्यैव तथा सत्युपदर्शित सिद्धांतविरोधापत्तेः
यदि च राजाज्ञादिस्थलेऽपि प्रवर्तनाविशेष्यक बोधस्यैवोपगमेन

विधि संबंधा भावना लिङर्थ इति सिद्धान्ता विरोध इत्युच्यते तदा-
स्तु प्रवर्तनाविशेष्यक बोधकानोहानिरिति अत्रापि शब्दभावनायां
शक्तिग्रह करणकत्वं शक्तिग्रह प्रयोज्य प्रवृत्त्यादि रूपफल प्रयोज-
कत्व रूपं पारिभाषिकमेव यथाश्रुते शक्तिग्रहे शब्दभावनायां जनक-
त्वरूप करणत्वाभावेन तथाविध करणता निरूपकत्वरूप तत्करण-
कत्वस्या संभवेना संगत्यापत्तेः अत्रापि पूर्ववत्करणकत्वांशे संसर्ग
विधयैव भानमुपगंतव्यम् यत्पदं विधा वाक्येन श्रूयेत तत्पदं क-
ल्पनीयामित्युक्तमेव अवांतर बोधयै भावनाफलकत्वमानेऽपि
महावाक्यार्थ बोधे तन्न भासेत प्रयोजनाभावात् अथवा प्रथममुप-
दर्शितांश त्रय विशिष्टार्थभावना विशेष्यक एव अवांतर बोधः तदु-
त्तरं च शब्दभावनायामुपदर्शिताकांक्षायां तत्पामुपदर्शितांश
त्रय विशिष्टार्थ भावना विशेष्यकनिरुक्त शब्दभावनात्वविशिष्ट
प्रवर्तनाविषयत्व विषयक महावाक्यार्थ बोध उत्पद्यते न तु शब्द
भावनाविशेष्यकावांतरबोधोऽपि प्रयोजनाभावात् मध्ये तथा बोधकल्प-
ने गौरवाच्च अत्र च विषयत्वं जन्यत्वं तदेव फलाकांक्षा निवृत्तेरिति

अत्र महावाक्यार्थबोधे अर्थभावनायां स्वर्गादिफलकत्वभानं
तु घटेन जलमाहरेत्यादौ छिद्रेतरत्वादिवदन्वयप्रयोजकरूपवत्त्व
रूपयोग्यताविधया अर्थभावनायां प्रवर्तनाविषयत्वाय ये तस्य ता-
दृश योग्यतात्वात् । अथ अन्वयप्रयोजकरूपवत्त्व रूपयोग्यताज्ञान
विधयार्थभावनानिष्ठ स्वर्गादिफलकत्वज्ञानस्य तत्र हेतुत्वे अभि-
धापि न तत्वेन ज्ञाता स्वरूपसतिवा हेतुरति प्रसंगादिति प्रवर्तनात्वे
न ज्ञाता नच निष्फले दुःखैक फले वा कर्मणि सा तथा ज्ञातुं श-
क्यते अपि तु भावनात्वेन ज्ञाता नच भाव्यानुपाधितौ तत्संभवः न
च क्रियाभाव्या कष्टत्वादिति समभिव्याहृत फलं प्रति भावनात्वेन
ज्ञातेति पक्षद्वय मिश्र ग्रंथासंगतिः तेन ग्रंथेन प्रवर्तनात्वेनाभिधा-
न्वये अभिधा गत स्वर्गादि फल जनकत्व लक्षणान्वय प्रयोजकरूप-
वत्व रूपयोग्यता ज्ञानस्य हेतुताया लाभादिति चेन्न, तत्र भावनात्वेन ज्ञा-
तेत्यनंतरं यातत्वेति शेषयित्वा सा तथा ज्ञातुं शक्यते इत्यनेन सहान्वयाँ
गीकारेण यथार्थभावनात्व ज्ञानं तत्र सा प्रवर्तना प्रवर्तनात्वेन ज्ञातुं
शक्यत इत्यर्थकस्य तथाविध ग्रंथस्योक्तार्थ एव विश्रामेणासंगतेः

स्माभावात् न चाग्रार्थभावनाया अप्रसक्तत्वेन कथमुक्तार्थलाभ

इति वाच्यं, दुःखैक फले कर्मणीत्यत्र कर्मपदस्यार्थभावनार्थकत्वे

न तस्या प्रसक्तत्वात् एवं प्रवर्तकज्ञान संपत्त्यर्थमावेतद्ज्ञानमावश्यकं,

यागादौ निष्फलत्वज्ञानकाले प्रवृत्ति वारणाय स्वकरणकत्व संबं-

धेन यागादि विशिष्टायामर्थभावनायामिष्ट साधनता ज्ञानस्य

हेतुतया मद्मत सिद्धत्वात् यागादिविशिष्टभावनायामिष्ट साध-

नताज्ञानकाले विशेषणीभूतयागेपि इष्ट साधनताज्ञानस्यावश्यक

तया तथाविधेष्ट साधनता ज्ञानकाले यागादौ निष्फलत्वज्ञाना

संभवात् न चैवं सति न्यायमता विशेषइति वाच्यं, न्यायमते

क्रियागतेष्ट साधनता ज्ञानस्य हेतुतया विशेष संभवात् केचित्तु

अर्थभावना गतेष्ट साधनताज्ञानं न मद्मते प्रवृत्ति हेतुः आपि

तु आभियागतेष्ट साधनता ज्ञानं अतएव पक्षधर्मिश्रैरप्युक्त

क्रियागतेष्टसाधनत्वं न विध्यर्थः आर्थीभावनागतमिति वि

शेष इति अन्यथा तेषां तत्र विध्यर्थत्व कथनस्या संगतेरित्याहु

तन्न तथा सति क्रियायां निष्फलत्व ज्ञानकाले प्रवृत्ति वारणासं-

मवात् अर्थभावनाविशेष्येकेष्ट साधनताज्ञानं हेतुत्वे तु तद्वा-

रण प्रकारस्योक्तत्वात् न चैवं सति आभिधागतामिति मिश्रग्रंथ

विरोध इति वाच्यम् लक्षणयातत्राभिधा पदस्यार्थ भावना पर-

त्वात् न चैवं सत्यपि मिश्र ग्रंथ विरोधः भट्टमतेऽभिधाया एव

शब्दलिङ्गत्वेनार्थ भावना गेतेष्ट साधनत्वस्य तदर्थत्वाभावादिति

वाच्यं तत्रत्यविध्यर्थ शब्दस्य विधिजन्य प्रतीति विषयार्थ कत्वे-

न तथाविध शाब्द बोध फलकता संबंधेन स्वर्गादिरन्वये स्व-

र्गादि फलकत्वस्यापि निरुक्तविधि प्रतिपाद्यत्वेन विरोधाभावात्

अथैवं फल भावनात्वेनार्थ भावनामात्र बोधोऽस्तु अर्थ भावना-

यां तथाविध प्रवर्तनाविषयत्वमाने निष्फलामितिचेन्न, त-

त्रोचारयत् प्रयोज्य प्रवृत्तौ तदनुकूल यत्नेष्ट प्रवर्तना ज्ञानस्य

कारणतया राजाज्ञादिस्थलानुरोधेनावश्यकतया तत्संपत्त्यर्थ

मेव तदुपगमात् न च तदुपगमोऽपि कथं तादृश कारण संपत्ती-

ति वाच्यम् कृत्यसाध्यता ज्ञानबले यागादौ प्रवृत्ति वारणाय

यागादिप्रवृत्तौ यागादि गोचर कृति साध्यता ज्ञानस्य हेतुतया-

तत्संपत्तये स्वजन्यत्व स्व प्रयोज्यकृति अजन्यत्वान्यतर रूप स्वोवि-
षयत्व संबंधेन शब्दभावनाया यागादि विशिष्टार्थ भावनाया-
मन्वयोपगमेन समान विधि वेद्यतयाशब्दभावनायामपि स्वजनक
कृति प्रयोजकत्व रूप याबाधनुरुक्तत्व बोधस्यावश्यकतया
तादृश कारण संपत्ति संभवात । न च तथाप्यर्थ भावनायां प्रया-
जादि सहकृतत्वमाने मानाभाव इतिवाच्यं प्रयाजादि सहकारि-
संदेह संवाद्य फलजनकत्व संदेहा हितस्य प्रवृत्तिप्रतिबंध
कस्य द्वेषस्योत्सारणार्थं तत्र तदन्वयोपगमात् अत्रापि या-
गादि विशिष्टार्थ भावनायां तद्वाने यागादि विशेषणेऽपि तद्वान
नानुपपत्त्यभावात् न चैवमपि प्रवर्तनायां स्तुत्यर्थवाद सह
कृतत्वस्य मानं किमर्थमिति वाच्यं । बलवदनिष्टानुबंधित्व
रूपप्रवर्तक ज्ञान संपत्त्यर्थं तदुपगमात् न च स्तुत्यर्थवादेन कथं
तत्संपत्तिरिति वाच्यं तद्घटकीभूत यत्किंचित् पदस्य प्राशस्त्य
रूपबलवदनिष्टाननुबंधित्वे लक्षणोपगमात् । अत एवार्थ
वादानां स्वार्थे ऽप्रामाण्यमिति सिद्धान्तः । न च तथापि स्वकर्

कत्व संबंधेन तत्र लिङ्शब्दनिरूपित शक्तिज्ञान माने किं मान-

मिति वाच्यं, करणकांक्षाबलेन तत्र तज्ज्ञानात् इदमभावबोधम्,

पक्षधर मिश्राणां शब्द भावना विशेष्यकार्थ भावनाप्रकारकबोध

एव संमतः तथा सत्येव पूर्वोपदर्शित तद्ग्रन्थस्य भावनात्वेन ज्ञातत्व-

नंतरं यातयेति प्रश्नं विनैव अभिधागतमिति विशेषइत्यभि-

धापदस्यार्थ भावनायां लक्षणां विनैव यथाश्रुत तद्ग्रन्थस्य स्वर-

सत एव निर्वाहात् न च शब्द भावनायां स्वर्गादि फलकत्वस्या

माने कथं स्वारस्य तस्तोन्निर्वाह इति वाच्यं, स्वर्गादि फलकत्व

विशिष्टायाः स्वविषयकत्व संबंधेन यागविशिष्टाया भावना-

याजनकत्व रूपाविष्टपिता संबंधे शब्द भावनायामन्वये विशिष्टा-

न्वय मर्यादयान्वय प्रयोजक रूपवत्व रूपयोग्यता विधया

स्वर्गादि फलकत्व लाभ संभवात्। अर्थ भावना विशेष्यक बोधां-

गीकारे उपदर्शित रीत्या प्रश्न लक्षणयोरनुसरण क्लेशः स्फुट

एव एवमेतन्मते शब्द भावनायां यागाद्यनुकूलत्व बोधे यागादौ

कृति साध्यता ज्ञान संपत्ति रुक्त रीत्या समानवित्ति वेद्यतानुसरणं

विनैव निर्वहति शब्द भावनायां यागादि विशिष्टार्थभावनायाः स्वजनकत्व स्वजनककृति प्रयोजकत्वान्यतर रूप स्वविषयत्व संबंधेनान्वयोपगमेन शब्द भावनायां स्वजनककृतिप्रयोजकत्व रूप यागाद्यनुकूलत्व बोधस्य स्वरसत एव लाभात् उक्तमते चसमान वित्तिवेद्यत्वानुसरणक्लेशः शाब्दबोधे समान वित्तिवेद्यत्वाभावेन तदनुसरणेप्य निर्वाहश्च स्फुट एव एतन्मते यागादौ सफलत्वं बलवदनिष्टाननुबंधित्वयोर्लाभोपि विशेष्यान्वय मर्यादया सुधंर एव, न चैतन्मते विध्युपरक्ता भावना लिङर्थ इति सिद्धान्त विरोध इति वाच्यं, प्रकृतविधित्वस्य प्रवर्तकज्ञान प्रकारत्व रूपत्वय उक्त मते शब्द भावनायामिवैतन्मते प्यर्थ भावनायां तत्सत्वे न विरोधात्, विध्युपरक्तेत्यस्य विधौ संबद्धत्यर्थकतामुपेत्य तादृश सिद्धान्त विरोधस्य प्रवेमुपदर्शितत्वाच्च एवमेतन्मते लिङर्थत्वम् लिङ्त्वावच्छिन्न शक्यत्व रूपं यथाश्रुतमेव उक्त मते तु लिङ्जन्य प्रतीति विषयत्व रूपं वाच्यमिति वैषम्यमपि स्फुट मेवेति दिक्। अन्नभट्ट

मते लिङ्त्वावच्छिन्न निरूपित शक्ति चतुष्टयं बोध्यं एकाशब्द भाव-
नात्व ज्ञानानुकूला तज्ज्ञानस्याकांक्षोत्थापकत्वेन शब्द भावनात्व
विशिष्टे प्रवर्तनात्वज्ञानानुरोधेन चावश्यकत्वात्, अपरा च
प्रवर्तनात्वज्ञानानुकूला राजाज्ञादि स्थले प्रवृत्तिजनकत्वेन
क्लृप्तस्य तादृश ज्ञानस्यावश्यकत्वात् अपरा च प्रवृत्त्यनुकूला
ऽभिधात्वो साक्षात्प्रवृत्त्य जनकेन शाब्द प्रवृत्तिजनने व्या-
पारत्वेन तस्या आवश्यकत्वात् अपरा चाभिधात्व ज्ञानानुकू-
ला तज्ज्ञानस्याप्यनुभव सिद्धत्वादिति शक्ति चतुष्टयमिति
वदन्ति अत्रोच्यते शक्ति भिन्नस्य भिधा पदवाच्यत्वे मानाभा-
वेन कुत्र तथा शक्ति कल्पनं न च पर प्रयोज्य प्रवृत्ति प्रतिपनि-
ष्ठ प्रवर्तना ज्ञानस्य हेतुतया राजाज्ञादि स्थलानुरोधेनावश्य-
कतया विधौ निष्ठ प्रवर्तना ज्ञानं विना न प्रवृत्तिरिति तदुपप-
त्यर्थं विधिनिष्ठाभिधात्वातिरिक्त पदार्थविशयं विधेश-
क्यमुपेय इति वाच्यं स्वेच्छाधीन प्रवृत्तिस्थले ऽवश्य क्लृप्त स्वेष्ट
साधनता ज्ञान हेतुतयैव राजाज्ञादितः पित्रादि शिरश्छेदादौ

पुत्रस्येष्ट साधनताज्ञान कल्पनेन प्रवृत्ति निर्वाहो तादृश कार्य
कारणभावे मानाभावात्, अपि तथापि व्यापारभिन्नस्य
कारणस्य परसमवेत व्यापार जनकत्वं स्वनिष्ठ व्यापारद्वा-
रैवेति नियमः स्वनिष्ठस्पंदादि द्वारा चक्रादिनिष्ठ भ्रमि जनके
दंडादाववधारित इति तादृश नियम बलेन लिङः स्मदादि समवेत प्र-
वृत्ति जनकत्वं स्वनिष्ठाभिधा रूप व्यापार द्वारैव निर्वहतीति लिङ-
निष्ठाभिधाख्य पदार्थ सिद्धिरावश्यकीति चेन्न, अनुमिति करणव्या-
प्ति ज्ञानादौ अस्मदादि समवेत परामर्शादि जनके स्वनिष्ठ व्यापारद्वा-
रकत्वाभावेन व्यभिचारात् तादृश नियमस्यैवासिद्धेः। न च परसमवेत
व्यापार जनकत्वं स्वव्यधिकरणव्यापार जनकत्वं रूपं नियम घटकमि-
ति न व्याप्तिज्ञानादौ व्यभिचारः अस्मदादि समवेत परामर्शस्य तद्व्य-
धिकरणत्वाभावादिति वाच्यं तथापि गयाश्राद्धादौ स्वव्यधिकरण
पित्रादिनिष्ठादृष्टरूप व्यापार जनके स्वनिष्ठ व्यापारद्वारकत्वाभावेन
व्यभिचारस्य दुर्वारत्वात्, अनुकूलतर्काभावेनोपदर्शित नियमस्या
प्रयोजकत्वाच्च एवमुक्त रीत्येष्ट साधनताज्ञानस्य प्रवृत्ति सामान्ये

हेतुत्वाविचारेण न आवश्यकेष्ट साधनताज्ञान विषयेष्ट साधन-

त्वस्यैव विध्यर्थत्वौचित्याच्च, एतेनास्यामि प्रायो विध्यर्थः सचेच्छा

विषय रूपः प्रवर्तनात्मकश्च इच्छा च लोके गुरुजानेर्श्चैव वेदेत्वीश्वर निष्ठै-

वेत्याचार्यमतमपि परास्तम्, अत्राभिनव भाट्ट मीमांसकाः इष्टसाधनतारूपा

प्रवर्तना लिङादिवाच्येत्यस्यापि वक्ष्यमाणदोष दुष्टत्वादुपयत्र प्रवर्त-

तामित्याकारक प्रवृत्युद्देश्यकेच्छात्मक प्रेरणारूपा प्रवर्तनैव लिङादि

वाच्येति तथाहि । इष्ट साधनताया लिङ्वाच्यत्वे पचेतिन पचतीत्ययच

कृतेः प्रथमांत पदार्थ नञर्थयोरन्वयांगीकार निमित्तं व्युत्पत्तिद्वयं न

पचेत न पचेदित्यत्र नञ श्रवण तुल्यत्वेपि प्रथमांत पदार्थ धात्वर्थ

मुख्यविशेष्यक बोधांगीकारेण व्युत्पत्ति द्वयं नाति राम इत्यादिवाक्येच

नञर्थे विध्यर्थेष्ट साधनतान्वयांगीकारा द्व्युत्पत्तिः स्वतंत्रेतिव्युत्प-

त्ति पंचक कल्पने गौरवं, निरुक्त प्रेरणाया लिङ् वाच्यत्वे च पचेदित्य-

त्र पाक पाकभावनायां स्वप्रयोज्यत्व संबंधेन लिङर्थ प्रेरणान्वयव-

त् न पचेदित्यत्रापि स्वप्रयोज्याभाव प्रतियोगित्व संबंधेन पाक-

भावनायामेव प्रेरणान्वयात्र व्युत्पत्ति भेद कल्पनं, पचतीत्यत्र च

चैत्रादेः कृतावाधेयत्व संबंधेनैव न पचतीत्यत्रापि स्वाश्रितता-
भाव प्रतियोगित्व संबंधेन कृतावेवान्वयात्र तत्कल्पनामिति
लाघवं । किंचाचार्या युक्त म भिनयेत्यादि वाक्य जन्येष्ट साध-
नता ज्ञानादेव शिष्यादेः प्रवृत्तावाचार्य प्रेरितोऽहं गामानया-
मीत्यादावाचार्यादेः प्रवर्तकत्वव्यवहारानुपपत्तिः इष्ट साधन-
ता रूप प्रवर्तनाया आचार्य दावसत्वेन प्रवर्तनाश्रयत्व रूप
प्रवर्तकत्वा भावात्, अस्मन्मते च प्रेरणा रूप प्रवर्तनाश्रयत्व-
स्य तत्र सत्वान्नत द्व्यवहारानुपपत्तिः न च प्रवृत्ती जनकेष्ट
साधनता बोधक लिङाद्युच्चारयितृत्वात्तस्य प्रवर्तकत्व व्यव-
हार इति वाच्यम्, तथा सति राजप्रेरित इति पदतौ प्रवर्तकत्वाभाव व्यव-
हारानापत्तेः न चान्याप्रेरितत्वे सति तादृशलिङ्च्चारयितृत्वं प्रवर्तकत्व-
मिति नोक्त दोष इति वाच्यं तथा सति पिशुन प्रेरिते राज्ञि प्रवर्तकत्व व्यव-
हारानापत्तेः । किंच भवन्मते येन स्वत एव पाकादौ इष्ट साधनत्वादि
बुद्ध्या प्रवृत्तं तस्य पाकभावनावर्तमान तादृशायां चैत्रः पचेदिति
प्रयोगापत्तिः इष्ट साधनत्वादि विशिष्ट पाकानुकूल कृतिमत्वाख्य (वि-

चैत्रेऽबाधितत्वात् मन्मते तु तादृशप्रवृत्तेः प्रेरणाप्रयोज्यत्वा-
भावाद्विषयबाधेनाप्रामाण्योपपत्तिः अथ भवन्मतेऽपि यत्रान्य-
प्रेरणा चैत्रस्य प्रवृत्तिस्तत्र पाकभावना वर्तमान तादृशायां चैत्र
पचेदिति प्रयोगस्य प्रामाण्यापत्तिः पाकानुकूलयाश्चैत्रनिष्ठ-
कृतेः प्रेरणाप्रयोज्यत्वस्याबाधादिति चेन्नैवम्। प्रयोज्यत्वं हि
स्वज्ञानजन्येष्टसाधनतानुमितिजन्यत्वं स्वज्ञानं प्रेरणाज्ञान-
तच्च तत्तत्प्रवृत्तिप्राक्कालवर्त्ति तत्तल्लिङादिपदज्ञाने नोत्पा-
तव्यत्यासेना संबन्धे प्रविश्यत इति तादृशव्याप्तिजन्येष्टसा-
धनतानुमिति जन्यत्व स्वरूपयोग्यत्वं लिङर्थ प्रेरणायाभावना-
न्वये संसर्ग इति तादृश संसर्गेण लिङर्थ प्रेरणावत्त्वस्य भावना
वर्तमानतादशायां तस्यां बाधान्न पचेदिति प्रयोगापत्तिः।
किं चान्यलभ्यत्वादिष्टसाधनत्वस्य न लिङ्वाच्यत्वं प्रवृत्ति
विषये यागादौ इष्टसाधनत्वानुमानेनैवेष्टसाधनताबोध-
संभवात्, भवति हि अयमत्र प्रवर्तनामित्याकारकोऽपेक्षा विष-
यत्वं इष्टसाधनत्वव्याप्यमतस्तेन तदनुमानं अभासुखे सुखत्व

भ्रमण सुख एव वा सुखं मे जायतामित्युदासीनेच्छा विषयत्वे इष्ट

साधनत्वाभावात् तत्र व्यभिचार वारणाय हेतावाकार पर्यंता-

नुधावनं प्रतारक तादृशेच्छा विषये व्यभिचार वारणायेति।

अत्रेच्छा विषयत्वं इच्छाविषयीभूत प्रवृत्ति विषयत्वं बोध्यं तेन

प्रवृत्तौ तदाङ्क्ये पुरुषेच्छाविषये इष्ट साधनत्वाभावेपि न व्य-

भिचारः यागादावेव हेतुसत्वादिष्ट साधनत्वानुमानामिति

वदंति तदसत् लाघवेन व्युत्पत्तिभेद कल्पनमनादृत्य संबंधे

भेदमात्र माश्रित्य पचति न पचतीत्यादौ समाना कारबोधांगी-

कारे चैत्रः पचति न पचतीत्यादि वाक्यजन्य शाब्दबोधानंतरं वर्त-

मान कालीन पाककृति तदभावयोश्चैत्र वृत्ति त्वसंशय निरासस्या-

नुभविकस्यानुपपत्तेः पाक कृति की दृशीति प्रश्ने चैत्र पचति

न पचती त्युत्तर योरौचित्यापत्तेश्च। भवन्मतेपि संसर्गभेदेन

व्युत्पत्तिभेदकल्पन प्रयुक्त गौरवस्यावश्यकत्वाच्च। किंचैवं चैत्रः

पश्यति चैत्र पश्यति चैत्रेण पश्यतीत्यादौ लाघवात्तत्ताद्विभक्ति-

कीनां तत्तदर्थ संसर्गक बोधजनने तात्पर्य ग्राहकतामंगीकृत्य-

चैत्र प्रकारक क्रियाविशेष्यकैकल्प बोधांगीकार संभवेन
प्रति समभिव्याहारं नामार्थ सुवर्थयोः सुवर्थ क्रिययोश्चान्वय
निर्वाहाय व्युत्पत्तिभेदांगीकार प्रयुक्त गौरवत्यागापत्तिः । एतेन
पचेत् न पचेदित्यत्रापि व्युत्पत्तिभेदकल्पनाभाव प्रयुक्तला-
घवोक्तिर्निरस्ता पचेदिति शब्दजन्य बोधात् प्रवर्तयति निवर्त-
यति वेति संशयनिरासासंभवाच्च । तादृशबोधादेवक्तुः
प्रेरणावर्तीन वा इति संशयनिरासापत्तेश्च कीदृशी कृतिरिति
प्रश्ने पचेन्न पचेदित्यनयोरुत्तरत्वापत्तेश्च । किं चेत्यादिनोक्ता-
चार्यादेः प्रवर्तकत्व व्यवहारानुपपत्तिरप्य संगता स्वातंत्र्ये
सति प्रवृत्ति जनकेष्ट साधनताबोधजनक लिङाद्युच्चारयितृ-
त्वस्यैव प्रवर्तकत्व रूपत्वात् राजप्रेरित पदातेः स्वातंत्र्याभा-
वात् पिशुनप्रेरितराजादेः स्वातंत्र्याच्चाप्रवर्तकत्व प्रवर्तकत्व-
व्यवहारोपपत्तेः पाकभावना वर्तमानतादशायां पचेदिति प्र-
योगापत्तिरप्यसंगता तादृशप्रयोगवारणे भवतां यथाग्रहः
तदाभावनानिष्ठस्य तत्तत्प्रवृत्ति प्राक्कालीन तत्तल्लिङादि

पदज्ञानोत्तरस्य तादृशप्रयोगोपाधित्वमंगीकृत्य स्वानुकूलत्व स्वप्रतिपादक धातु समभिव्याहृत तत्तत्प्रवृत्ति प्राक्कालीनतत्तल्लिंगादि पदज्ञानोत्तरत्वोभय संबंधेन पाकस्य कृतावन्वयमंगीकृत्य वासवारणीयः प्रेरणयेष्ट साधनत्वस्याक्षेपणान्यलभ्यत्वं तस्यालिङ् वाच्यत्वाभावे प्रयोजकतयोपन्यस्तं तदपि न सत्। इष्ट साधनत्वेन प्रेरणाया आक्षेप संभवेन प्रेरणाया अन्यानन्यलभ्यतया लिङ् वाच्यत्वासंभवात्, तथाहि दृश्यते हि कुलाल समीपे घट सामग्री कृतवति पुरुषे कुलालस्य घट निर्माणप्रवृत्युद्देश्यकेच्छानुमानं ततः प्रवृत्तस्य कुलालस्य तत्प्रेरितेन मया घटं कृतं इत्यादिव्यवहारः भवति चेष्टसाधनत्वादिज्ञानं प्रवृत्ति सामग्री घटकं भवद्धिरपि प्रवर्तनयातदाक्षेपांगीकारात्। एवं चेष्ट साधनताबोधक शब्दोच्चारणमात्रेनैव प्रवृत्युद्देश्यकेच्छा रूपप्रेरणाया अन्यलभ्यत्वान्नलिङ् वाच्यत्वं न च पूर्वोक्तरीत्या वैपरीत्यस्यापि संभवतद्विनिगमनाविरह इति वाच्यं, शब्दनिरपेक्ष स्वतः प्रवृत्तौ बालस्य तां

इष्ट साधनताज्ञान जन्यत्वस्य प्रेरणाज्ञान जन्यत्वस्य चाव-
गमेन शब्द सम नंतर मानेव प्रवृत्तौ हेतुत्व निष्ट साधनताज्ञाना-
नुमान संभव एवं विनिगमकत्वात् शब्दाविद्यपरप्रयोज्य
प्रवृत्तौ इष्ट साधनता ज्ञान मनपेक्ष्य प्रेरणाज्ञान जन्यत्वस्य
कल्पनमयमात् । तत्र प्रेरणाया इष्ट साधनत्वापेक्षस्य म-
वत्तोपि संभतत्वात् गुरुतराहत्वाद्य घटित तदिच्छया प्रेरण-
या इष्ट साधनत्वाक्षेपमपिदृष्येष्ट साधनत्वेन प्रेरणाक्षेपेला-
घवाच्चेति दिक् । किं चेच्छा रूप प्रेरणाया लोके गुरुत्वनिष्ठ-
त्व संभवेपि वेदस्य भवन्मतेऽपौरुषेयतया सा किंनिष्ठेति
वक्तव्यं । न च वेद सा लिङादि निष्ठैवेति वाच्यं, गुणे गुणा-
नंगीकारात् । जन्य सत्वावच्छिन्नं प्रति द्रव्यत्वेन समवायिका-
रणतया लिङ् इच्छायां समवायिकारणत्वा संभवाच्च न च
शब्दस्य द्रव्यत्वान्न दोष इति वाच्यं स्पंद समवायि कारणता-
वच्छेदकतया सिद्धस्य मूर्तत्वस्य तत्राभावेन मूर्त द्रव्यत्वस्य
विभुत्वाभावेना मूर्त द्रव्यत्वस्य च तत्रासंभवात् न च भवतां

जीवातिरिक्ते श्वरेणेनित्येच्छांगीकारवदैदिका शब्दोपि नित्यत्वां

गीकारे बाधका भावः गुणे गुणस्याभ्यासिद्धत्वभादिति वाच्यं

ईश्वरस्य चेतनत्वेन शब्दस्याचेतनत्वेन वैषम्यात्, अनु-

भव विरुद्ध पात्केपित्कल्पने उपेक्षणीयतापत्तेश्च, अत्रेदं

विचार्यते इष्ट साधनत्वं विधार्थतया प्रवृत्ति जनकतावच्छेद-

कत्व पर्याप्त्यधिकरणं न वा, इष्ट साधनत्व ज्ञानकालीन

कृति साध्यत्व ज्ञानं प्रवर्तकं न वेति वावि प्रतिपत्तिः। तत्र प्र-

थमे विधि कोटि नैयायिकानां निषेध कोटिर्गुरूणाम्। द्वि-

तीये विधी कोटिर्गुरूणां निषेध कोटिर्नैयायिकानां अत्र गु-

रवः। कृति साध्यता ज्ञानं चिकीर्षा द्वारा प्रवृत्ति हेतुः नेष्ट

साधनता ज्ञानं उपायेच्छा द्वारा प्रवृत्ति हेतुः उपायेच्छायाः

स्वातंत्र्येण प्रवृत्तौ हेतुत्वे मानाभावात् न च कृतिसाध्यता-

ज्ञानस्य प्रवृत्तौ हेतुत्वे मानाभावः। कृत्य साध्यता ज्ञान

काले प्रवृत्तिवारणाय कृत्य साध्यताज्ञानाभावस्यैव हेतुत्व

मास्त्विति वाच्यं, यावत्प्रकारकेच्छा सा तत्प्रकारक ज्ञान सा-

ध्या इति व्याप्ति बलात् चिकीर्षां प्रति कृति साध्यता ज्ञानस्य

हेतुत्वासिद्धौ चिकीर्षा द्वारा कृतिसाध्यताज्ञानस्य प्रवृत्ति

हेतुत्वासिद्धिः । अन्यथा कृत्य साध्यताज्ञानाभावस्य सर्वदा

सत्वेन सर्वदाचिकीर्षापत्तेः कृत्य साध्यताज्ञानाभावस्य हेतु-

त्वे अवच्छेदकगौरवापत्तेश्च, न च भवन्मते कृति साध्यता

ज्ञानस्य हेतुत्वे निश्चयत्व निवेशेन गौरवमितिवाच्यं, कृत्य

साध्यता ज्ञानत्वेन प्रतिबंधकतायां भ्रमत्वानिश्चयाना स्कंदि

तत्व निवेशे महागौरवापत्तेः कृति साध्यत्वनिश्चयापेक्षया

भ्रमत्व निश्चयस्यगुरुशरीरत्वात्, अत्र केचित् । कृतिसाध्यता ज्ञाने

कृत्य साध्यता ज्ञानाभावस्य हेतुत्वे कल्पनीये तत्र कृत्य साध्यता

ज्ञानाभाव विशिष्टं प्रति कृत्य साध्यता ज्ञानाभावत्वेन हेतुत्व कल्प

नात् प्रवृत्तेरपि कृत्य साध्यता ज्ञानाभाव विशिष्टतया कार्य

कारण भावेनैव निर्वाह संभवात् न प्रवृत्तौ कृत्यसाध्यताज्ञाना

भावस्य स्वातंत्र्येण हेतुत्वमिति प्राहुः तदसत्, कृतिसाध्यता

ज्ञानस्य हेतुत्वे भवदुक्त पूर्वोपदर्शितरीत्या पाकगोचर प्रवृत्ते

प्रति कृति साध्यत्वाभाववान्पाक एतादृशानुमिति सामग्र्याः प्रति-
बंधकत्वं न कल्प्यते प्रवृत्ति सामग्रीकाले पाकत्वावच्छिन्नाव-
च्छेदक कृति साध्यता ज्ञानस्यावश्यकत्वेन बाध मुद्राऽपैव-
तादृशानुमिति प्रतिबंधकत्वेन बाधाभावघटितानुमिति साम-
ग्र्याः प्रवृत्ति सामग्र्याश्च युगपन्मिलनासंभवेनैवोपपत्तेः
भवन्मते कृत्य साध्यत्व प्रकारक ज्ञानाभाव घटित प्रवृत्ति
सामग्री सत्व कालीन तादृशानुमिति सामग्री काले पाक गोचर
प्रवृत्ति वारणाय तादृशानुमिति सामग्र्याः प्रतिबंधकत्व
कल्पने न महागौरवापत्तेः न कृति साध्यत्वाभाववत्पाक-
वान्देश एतादृश विशेष्य विषयताशालि मानसं प्रति पाक-
गोचर प्रवृत्ति सामग्र्याः प्रतिबंधकत्वं न कल्प्यते तत्र तादृश
मानस सामग्रीकाले पाकविशेष्यक कृति साध्यत्वाभाव
प्रकारक ज्ञानस्यावश्यकत्वे प्रवृत्ति सामग्र्या एवाभावात् कृति
साध्यत्वाभाववान् एतादृशज्ञानाभावस्यहेतुत्व लाघवमिति
वाच्यं । कृति साध्यत्व प्रकारक कृति साध्यत्वाभाव प्रकारक

पाकविशेष्यक ज्ञान परेकदा सत्वेन तादृश मानसं प्रति तादृश सामग्र्याः प्रतिबंधकत्वं मयापि न कल्प्यत इति लाघवाभावात्, एवं कृति साध्यताज्ञानस्येष्टे तुल्ये कृतिसाध्यत्वप्रकारिकपाकविशेष्यकज्ञानत्वावच्छिन्नाभावमानसं प्रति पाकगोचर प्रवृत्तिसामग्र्याः प्रतिबंधकत्वं न कल्प्यते तादृश प्रवृत्ति सामग्रीकाले पाकविशेष्यककृति साध्यत्व प्रकारक ज्ञानस्यावश्यकत्वेन कृति साध्यत्व प्रकारक ज्ञानाभाव मानसे स्वरूपसत्कृति साध्यत्वप्रकारकज्ञान प्रतिबंधकत्वेनोपपत्तिरिति भवन्मते तादृश मानसं प्रति तादृश सामग्र्याः प्रतिबंधकत्व कल्पने महागौरवापत्तिरिति एवं प्रामाण्य विशिष्ट कृतिसाध्यत्व प्रकारक पाकविशेष्यक ज्ञानवानहमिति मानसे पाकगोचरप्रवृत्ति सामग्र्याः प्रतिबंधकत्वं न कल्प्यते तादृश विशिष्ट विषयताशालि मानस सामग्री घटकत्वेन अप्रामाण्य प्रकारक कृति साध्यत्व प्रकारक ज्ञानस्यावश्यकत्वेन अप्रामाण्यज्ञानास्कंदित कृति साध्यत्व प्रकारक ज्ञान घटित प्रवृत्ति सामग्र्य सत्वेन न तादृश सामग्र्याः प्रतिबंधकत्वमिति भवन्मते कृत्य साध्यत्व प्रकारकज्ञानाभाव घटित प्रवृत्ति सामग्री तादृश मानस सामग्र्यो रेककाल

सत्वे बाधकाभावात्तादृश मानसं प्रति तादृशप्रवृत्ति सामग्र्याः प्रति-

बंधकत्व कल्पनेहि गौरवापत्तिरिति न च पाक कृति साध्यताज्ञानं न प्र-

मेति ज्ञानाभावस्य स्वातंत्र्येण न तु त्वं मयापि बाधमिति वाच्यं। तर्हि

एतादृश कार्यकारणभावा कल्पने न लाघवादिति। एवं इच्छाविशिष्ट

कृतिसाध्यत्ववत्पाकवान् यम् देश इति विशिष्ट वैशिष्ट्य बोध्य सा-

मग्र्यां प्रवृत्ति प्रति बंधकत्वे विशेषणतावच्छेदक प्रकारक ज्ञानस्यापि-

वेशोपि न क्रियते प्रवृत्ते सामग्रीमुद्रयातस्यावश्यकत्वादित्यलम-

तिविस्तरेण। अथ कृति साध्यताज्ञानस्य हेतुत्वे जीवनयोनि कृति साध्यता

ज्ञानात्प्राण पंचक संचारकं न प्रवृत्तिः। न चेष्टापत्तिः तस्य सुखदुःखा-

दिवत् प्रवृत्तिस्वरूपायोग्यत्वात् न च प्रवृत्ति साध्यताज्ञानत्वेन हेतु-

त्वात्तत्र प्रवृत्ति साध्यता ज्ञानाभावात् न प्रवृत्तिरिति वाच्यं पाको

न कृतिसाध्यः पाकः प्रवृत्तिसाध्य इतिज्ञानानंतरमपि प्रवृत्त्या-

पत्तेरतो कृति साध्यता ज्ञानत्वेन कृतिसाध्यता ज्ञानस्यैव प्रवर्तकत्वं

स्वीकरणीयं तथा च जीवनयोनि कृति साध्यता ज्ञानात् प्राणपंचक

संचारे प्रवृत्त्यापत्तिरिति चेन्न चिकीर्षाधीनत्वस्य कृतौ विशेषणत्वात्

तत्र चिकीर्षाधीन कृतिसाध्यताज्ञानाभावात् न प्रवृत्तिः न च साध्य-

ताख्य विषयिता संबंधावच्छिन्न प्रतियोगितक प्रवृत्त्यभावत्वा-

वच्छिन्न प्रतियोगिताकाभाव विशिष्ट विशेष्यता संबंधेन कृति

साध्यताज्ञानस्य हेतुत्वात् तादृश संबंधेन कृतिसाध्यताज्ञानस्य

प्राणपंचक संचारे भावात्प्रवृत्त्यभावाय पर्यां कथं चिकीर्षाधी-

नत्व विशेषणमिति वाच्यम्, यज्जीवन योनि कृतिसाध्यताज्ञाना-

त् प्रवृत्त्यापत्तेस्तादृश संबंधेन कृतिसाध्यता ज्ञानस्य तत्र सत्वात्

तद्वारणाय कृतौ तद्विशेषणस्यावश्यकत्वादिति । एतेन धर्मिता

वच्छेदकाभिश्रित कृतिसाध्यता ज्ञानस्य हेतुत्व कल्पनात्प्राणपंचक

संचारत्वं धर्मितावच्छेदकीकृत्य कृतिसाध्यताज्ञानस्य हेतुत्वात्

कल्पनात्, तत्र प्रवृत्त्यापत्तेरभावात् कथं तादृश विशेषणमिति

निरस्तं । कृतिसाध्यताज्ञानात् यत्र प्रवृत्तिवारणाय तदावश्यकत्वा-

त् यत्त्वं धर्मितावच्छेदकीकृत्य यागोद्या प्रवृत्त्यनुरोधेन तादृश

ज्ञानस्य हेतुत्व कल्पनादिति । अत एव प्रवृत्तिं प्रति कृतिसाध्य-

ताज्ञानस्य धर्मितावच्छेदकता प्रत्यासत्त्यैव हेतुत्वलाघवात् तथा-

च प्राणपंचकसंचारत्वे चिकीर्षाधीन कृति साध्यत्व भ्रमात्,

प्रवृत्ति वारणाय प्रकारता संबंधेन प्रवृत्तिं प्रति प्राणपंचक

संचारत्व भेदस्यावश्यं हेतुता कल्पनीयतया कृतौ चिकीर्षाधी-

नत्व विशेषणम् व्यर्थमित्यपि परास्तम्, उक्त दोषवारणाय

तादृश विशेषणस्यावश्यकत्वात्, न च भोजनसाध्ये भ्रमा-

दौ प्रवृत्त्यापत्तिस्तत्रापि चिकीर्षाधीनकृति साध्यताज्ञान सत्वादिति वाच्यं

स्वेच्छाधीनत्वस्यैव कृतौ विशेषणीयत्वात्, तत्त्वं च स्वावच्छिन्न

विशेष्यताकेच्छाधीनत्वं स्वपदं प्रवृत्ति विशेष्यतावच्छेदकत्व

नाभिमत तत्तद्धर्मपरं उक्त स्थले च भ्रमत्वादेस्तादृश धर्मतया

भोजनादि कृतेस्तदवच्छिन्न विशेष्यताकेच्छाधीनतया भ्र-

मो न स्वेच्छाधीन कृतिसाध्यः। किंतु भोजनेच्छाधीन कृतिसाध्य

इत्यतः भ्रमो नान्तरीयक इत्युच्यते अन्येच्छाधीनकृतिसाध्यत्वाद्यत

तथा च स्वेच्छाधीन कृति साध्यताज्ञानाभावान्न तत्र प्रवृत्तिरिति

न च भ्रमो न कृति साध्यः किन्तु भोजनसाध्यस्तथा च कृति

साध्यताज्ञानाभावादेव प्रवृत्ति वारणसंभवे किमर्थं स्वेति

च प्राणपंचकसंचारत्वे चिकीर्षाधीन कृति साध्यत्व भ्रमात्,

प्रवृत्ति वारणाय प्रकारता संबंधेन प्रवृत्तिं प्रति प्राणपंचक

संचारत्व भेदस्यावश्यं हेतुता कल्पनीयतया कृतौ चिकीर्षाधी-

नत्व विशेषणम् व्यर्थमित्यपि परास्तम्, उक्त दोष वारणाय

तादृश विशेषणस्यावश्यकत्वात्, न च भोजन साध्ये भ्रमाभावदौ

प्रवृत्त्यापत्तिस्तत्रापि चिकीर्षाधीनं कृति साध्यता ज्ञान सत्वादिति वाच्यं

~~...भ्रमो न स्वेच्छाधीन कृति साध्यः । किंतु भोजनेच्छाधीन~~

स्वेच्छाधीनत्वस्यैव कृतौ विशेषणीयत्वात्, तत्वं च स्वावच्छिन्न

~~कृति साध्य इत्यतः भ्रमोनानुमित्यिक इत्युच्यते अन्येच्छाधीन कृति~~

विशेष्यताकेच्छाधीनत्वं स्वपदं प्रवृत्ति विशेष्यतावच्छेदकत्व

~~साध्यत्वाघात तथा च स्वेच्छाधीन कृतिसाध्यता ज्ञानाभावान्न तत्र~~

नाभिमत तत्तद्धर्मयोः उक्त ध्यके च भ्रमत्वादेस्तादृश धर्मतया

~~...तीति न च भ्रमो न~~

भोजनादि कृतेष्व तदवच्छिन्न विशेष्यताकेच्छान धीनतया भ्र-

मोन स्वेच्छाधीन कृतिसाध्यः । किंतु भोजनेच्छाधीन कृतिसाध्य

इत्यतः भ्रमोनानुमितिक इत्युच्यते अन्येच्छाधीन कृतिसाध्यत्वाघात

तथा च स्वेच्छाधीन कृति साध्यता ज्ञानाभावान्न तत्र प्रवृत्तिरिति

न च भ्रमो न कृति साध्यः किन्तु भोजन साध्यस्तथा च कृति

साध्यता ज्ञानाभावादेव प्रवृत्ति वारण संभवे किमर्थं स्त्रोता

दृश विशेषणमिति वाच्यम्, क्रियां विनापि मुहूर्त भारोत्तो-

लनादौ श्रमस्यानुभवेन कृति साध्यत्वेऽपि श्रमे सत्त्वस्या न च धर्मिता-

वच्छेदक भिन्न कृति साध्यता ज्ञानस्य हेतुत्वात्, श्रमत्वं धर्मिताव-

च्छेदकीकृत्य कृति साध्यता ज्ञानस्य हेतुत्वाकल्पनात् न तत्र प्रवृत्त्या-

पत्तिरिति वाच्यं, धर्मितावच्छेदकं च ~~भोजनादि नांतरीयक~~ पचन श्र-

मपि पाकादि प्रयोजकश्रमत्वेच्छाय गमनागमनादिकं कृतं तन्नगम-

नागमनादि कृतेः फलेच्छाधीनया श्रमेच्छाधीनत्वेन तादृश कृति साध्य-

त्वादीति ज्ञानात् तत्श्रमे अभेदमवधेयम्, तादृश विशेषणदानेऽपि

तादृश कृति साध्यत्व भ्रमात् च भोजनादि नांतरीयक श्रमे प्रवृत्ति-

वारणाय प्रकारता संबंधेन विशेष्यतावच्छेदकता संबंधेन वा प्र-

वृत्तिं प्रति श्रमत्वभेदस्यावश्यं हेतुतया स्वेच्छाधीनत्व विशेषणं

व्यर्थमेव, परंतु घटादौ जीवनयोनि कृतिसाध्यता भ्रमात् प्रवृत्ति-

वारणायेच्छाधीनत्व मात्रम् कृतौ निवेशनीयम्; न च गुरुमतेऽन्य-

थाख्यात्यस्वीकारान्न दोष इति वाच्यं, विसंवादि प्रवृत्त्यनुरोधेन ता-

दृश कृति साध्यत्वा संसर्गाग्रहत्वेन हेतुताया आवश्यकत्वात्,

अन्यथा (व्याप्तिस्थाना) मौष्टिकज्ञानद्वय स्वीकारेऽपि तादृश कारणवत्ता-

नुत्पत्तिवारणासंभवादिति, केचित्तु ममौन कृतिसाध्यः किन्तु क्रिया

साध्य इति तथा कृति साध्यताज्ञानाभावादेव प्रवृत्त्यापत्तिवारणसंभ-

वान्न कृतौ तद्विशेषणमिति न च मुहूर्त मौन ~~मौन~~ तोलनादौ क्रियावि-

रहात् कथं भ्रम इति वाच्यं, तथापि नाडी क्रियाधीन भ्रम संभवात्

शेषं पूर्ववदित्याहुः। न च केवलकृति साध्यताज्ञानस्य हेतुत्वे तृप्तोऽपि

भोजने प्रवर्तेत इति वाच्यं, तत्तत्कालीन कृति साध्यताज्ञानस्यापि हे-

तुतया तृप्तिकालीन कृति साध्यताज्ञानस्याहेतुत्वेन तत्र प्रवृत्त्या

पत्ति संभवात्, न च तत्तत्कालीन कृतिसाध्यताज्ञानस्य हेतुत्वे

किं मानमिति वाच्यं इदानीं कृत्य साध्यं कदाचित्कृति साध्यमि-

ति ज्ञान काले प्रवृत्त्यापत्तेरेव मानत्वात्, अथ इदानीं कृति साध्यं

नेष्टसाधनमिति ज्ञान काले प्रवृत्त्यापत्तिः न च तत्तत्कालीन कृति

साध्यताज्ञानस्य हेतुता कल्पनं नैव तद्वारणमिति वाच्यं, अत्र तत्त-

त्काल पदेन दंडात्मकः कालो ग्राह्यः क्षणत्वस्यापरिचेयत्वात्त-

था च दंडात्मककाल मध्ये त्वक्षस्य तदंतर्गत पूर्वक्षणे प्रवृत्ति

दर्शनात् तत्कालीन कृतिसाध्यताज्ञानस्य हेतुतया आवश्यकत्व

द्वितीयक्षणे नेष्टसाधनमिति ज्ञाने सति सति च कृतिसाध्यताज्ञाने

तदुत्तरक्षणे प्रवृत्त्यापत्तेर्वज्रलेपत्वादिति चेन्न, स्वविशेषणवत्ता

प्रतिसंधान जन्य कार्यताज्ञानस्य हेतुत्वात् तत्र स्वं पुरुषः तत्र

विशेषणं कामनाश्रुति तत्कालजीवित्वं च तथा च नेष्टसाधन

मिति ज्ञान काले तल्लिंगक कार्यताज्ञान विरहात् तत्र प्रवृत्तिः न च

सामान्यतः स्वविशेषणवत्ता प्रतिसंधानजन्य कार्यताज्ञानस्य

प्रवर्तकत्वेऽपि शौचलिंगक कार्यताज्ञानसत्वे नेष्टसाधनमिति

ज्ञान सत्वे तु तस्या प्रवृत्त्यापत्तेरिति वाच्यं काम्यगोचर प्रवृत्तित्वा-

वच्छिन्नं प्रति इष्टसाधनतालिंगक कार्यताज्ञानस्य हेतुत्वात्

नित्यगोचर प्रवृत्तित्वावच्छिन्नं प्रति शुचित्तत्कालजीवित्वालिंगक

कार्यताज्ञानस्य हेतुत्वात् तथा च नेष्टसाधनमिति ज्ञान काले इष्ट

साधनत्वलिंगक कार्यताज्ञान विरहान्न प्रवृत्त्यापत्तिरिति अथवा

लक्ष्यस्तनपान गोचर प्रवृत्तिर्न स्यादिति इष्टसाधनतालिंगक

कार्यताज्ञानापेक्षया शुक्रकंठतया बालो प्रवर्ततेति चेन्न, एकका-

लीन एकात्मप्रवृत्तित्वसंबंधेन इष्ट साधनताज्ञान विशिष्टकृ-
ति साध्यताज्ञानत्वेन हेतुत्वात् तनयान गौचर प्रवृत्तिस्थले ता-
दृशसंबंधेन भ्रमणात्मक इष्ट साधनताज्ञान विशिष्टतादृशज्ञान
संभवान व्यभिचारः। न चेष्ट साधनताज्ञान विशिष्ट कृति साध्यता
ज्ञानत्वेन कृति साध्यताज्ञान विशिष्टतादृशज्ञानत्वेन वा विनिगम-
नाविरहात्कार्य कारणभावद्वयं तदपेक्षया इष्ट साधनता विषयक
कार्यताज्ञानत्वेनैव हेतुतास्तु एककालीनत्वांशेन लाघवमिति वाच्यं,
तादृशेष्ट साधनताविषयक कृति साध्यताज्ञानस्यासंभवात् एकस्य
कालावच्छेदेन साध्यत्व साधनत्वयोर्विरोधेन ग्रहीतुमशक्यत्वात्
तथाहि। साध्यत्वं कृत्युत्तराक्षणवृत्तित्वं इष्ट साधनत्वं चेष्या-
व्यवहित पूर्वक्षणवृत्तित्वे सति इष्टकाल वृत्तित्वंतयोरेकत्र एक ज्ञान-
न ग्रह्यमाणताज्ञान सामान्य सामग्री वशाद्विशेष्य विशेषणयोरेक
क्षणवृत्तित्वं भासते तथा चैकस्याद्यक्षणवृत्तित्वं इष्ट काल वृत्तित्वं
च एकक्षणे प्रसिद्ध मतो ज्ञानेन ग्रहीतुमशक्यं तथा इष्ट साधनता
विषयक कृति साध्यताज्ञानासंभवेन इष्ट साधनताज्ञान विशिष्टकृति

साध्यताज्ञानत्वेनावश्यं हेतुत्वं स्वीकरणीयमिति यद्वा कृति साध्यत्वं प्रतियोगिता संबंधेन कृतिकालीन प्रागभावविशिष्टत्वं इष्टसाधनत्वं इष्टाव्यवहित पूर्वक्षण वर्तित्वं तयोश्च एकक्षणे प्रागभावविशिष्टत्वं पूर्वक्षण वर्तित्वंच विरुद्धमतो ज्ञानेन ग्रहीतुमशक्यतयाऽन्यथानुपपत्या तादृश ज्ञान विशिष्ट ज्ञानत्वेन हेतुत्वमिति, न च इष्टसाधनताज्ञान विशिष्ट कृति साध्यता ज्ञानत्वेन हेतुत्वे इष्ट साधनता ज्ञान कृति साध्यता ज्ञानाप्रामाण्य ज्ञानाभाव निश्चयत्वादीनामेकत्र निवेशे विनिगमनाविरहेणानंत कार्यकारणभावबत्यातदपेक्षया वरं इष्ट साधनताज्ञानत्वेन कृतिसाध्यताज्ञानत्वेन हेतुत्वमस्तु लाघवादितिवाच्यं पाकमुख्यविशेष्यकेच्छात्वावच्छिन्नं प्रति पाकविशेष्यक इष्टसाधनता ज्ञानत्वेन हेतुत्वं न कल्प्यते मन्मते मुख्यविशेष्यकं पाक साध्य सुखत्व प्रकारकेच्छाया एवोपगमेन पाकमुख्य विशेष्यक इच्छा विरहेणोक्त हेतुत्वाकल्पनात् भवन्मते तत्कल्पने गौरवमिति एवं पाक मुख्य विशेष्यक इच्छां प्रति पाकमुख्यविशेष्यकासिद्धत्व ज्ञानाभावस्य हेतुत्वाकल्पमादिति लाघवाच्च न च सुख विशेष्यक इच्छां प्रति-

सुखत्वप्रकारकज्ञानत्वेन हेतुत्वे लाघवात् भवन्मते पाकसाध्य सुखत्वप्रकारकेच्छा स्वीकारेण पाकसाध्यसुखत्वप्रकारकज्ञानत्वेन हेतुत्वे शरीरगौरवमितिवाच्यं। पाकसाध्यसुखत्वप्रकारक इच्छायाउभयवादिसिद्धत्वेन भवन्मतेसिद्धकार्यकारणभावकल्पनेनैव निर्वाहसंभवात्, परंतु सुखत्वप्रकारकेच्छां प्रति सुखत्वप्रकारकज्ञानत्वेन हेतुत्वं न कल्प्यते तादृशेच्छा विरहात् भवन्मते तत्कल्पने महागौरवापत्तेः न च पाकगोचरचिकीर्षां प्रति पाकसाध्यसुखेच्छात्वेन हेतुत्वे गौरवं मन्मते सुखेच्छात्वेन हेतुत्वे लाघवमिति वाच्यं। पाकसाध्यसुखेच्छाया एव सुखेच्छात्वेन हेतुत्वादिति वस्तुतस्तु इष्टसाधनतालिंगककर्यतानुमितिनिष्ठवैजात्यमवश्यंस्वीकार्यं ... चारमिया स्वीकरणीयंतथा च विजातीयानुमितित्वेनैव प्रवृत्तौ कारणत्वमस्तु लाघवात् भवन्मते कृतिसाध्यताज्ञाने इष्टसाधनताज्ञाने च निश्चयत्वे निवेश्य अनाहार्यत्वं च निवेश्य स्वातंत्र्येण प्रवृत्तौ इष्टसाधनताज्ञानस्य कारणत्वकल्पने ~~महागौरवापत्तेः~~ एवम् अप्रामाण्यप्रकारकज्ञानाभावनिश्चयत्वादिनिवेशप्रयुक्तविनिगमना

विरहेणानंत कार्यकारणभावकल्पनेन च महागौरवापत्तिः। मन्मते अनुमितौ संशयत्वाहार्यत्वाभावेन निश्चयत्वाचनिवेशात् एवं स्तनपानगोचर प्रवृत्तिस्थले च स्मरणात्मकपरामर्शजन्यानुमितेः स्वीकारान्न दोषः। एवं प्रत्यक्षादौ प्रवाचि सामग्रीप्रतिबंधकतायां इष्टसाधनत्वप्रकारकज्ञाननिवेशे लाघवम् मवन्मते तत्प्रवेशे महागौरवापत्तिः। एवं सामग्री प्रतिबंधकतायां निश्चयत्वादि निवेश प्रयुक्तविनिगमनाविरहे निबंधनानेक प्रतिवध्य प्रतिबंधकभाव कल्पनेनात्यंतागौरवमिति अत्र शुचि विहितकालजीवित्व लिंगककार्यताज्ञानहेतुत्व कल्पनागौरवं एवं च तत्रापि लाघवेन विजातीयानुमितित्वेन नित्यगोचर प्रवृत्तित्वेन कार्यकारणभावकल्पनीयः। तथा उभयपरामर्श जन्यानुमितौ उभयजातिसत्वेन प्रत्येकमात्रजन्यानुमितौ परस्परात्यंताभावसमानाधिकरण प्रत्येकजातिसत्वेन जातिसांकर्यात् कथं विजातीयानुमितित्वेन हेतुत्वमितिचेन्न प्रवृत्तिजनकतावच्छेदकत्वेन तदुभयपरामर्शाजन्यानुमितौ एका जातिः स्वीक्रियते तादृश जातेरेव कारणतावच्छेदकत्वात्, न च येनेष्ट

साधनामिति ज्ञान विषये घटत्वादि लिंगकाइष्ट साधनताज्ञान विष
ये इष्ट साधनत्वादिलिंगक कार्यतानुमिति घट पाकौ विषयी
कृत्य समूहालंबनात्मिका जाता तत्र तादृश वैजात्यस्यावश्यकत्वे
न इष्ट साधनामितिज्ञाना विषये प्रवृत्तिः स्यात्, तादृश वैजात्या
वच्छिन्नानुमितिसत्वादिति वाच्यं भवन्मतेपि इष्ट साधनताज्ञाना
धीन इच्छोत्तरं उपादान विषयतानिष्ठसाधनताज्ञानोत्तरं प्रवृत्त्या
पत्तेः तत्रेष्टापत्तौ मन्मतेपि तुल्यामिति । नच विसंवादिप्रवृत्तौ
स्वतंत्रोपास्थित मत्कृति साध्यत्वा संसर्गगतस्य हेतुत्व कल्पने
गौरवमिति वाच्यम् । एकदेशिनोऽन्यथाख्याति स्वीकारेणाति विरहा-
त नच गुणगत जातौ मानाभावे कथं विजातीयानुमितित्वेन हेतु
त्वमिति वाच्यं अत्रापि एकदेशिमताश्रयणादिति वदंति । अत्र नै-
यायिकाः । यदुक्तं इष्ट साधनताज्ञान विशेष कृति साधनताज्ञा-
नत्वेन हेतुत्वं तन्न तत्र विनिगमना विरहेण कार्यकारणभावद्वय-
स्यावश्यकत्वेनानवच्छेदक गौरवेण गौरवापत्तेः तदपेक्षया स्वातं-
त्र्येष्ट साधनताज्ञानत्वेन कृति साधनताज्ञानत्वेन हेतुत्वमेव लघी-

पात्, एवं च इष्टसाधनताज्ञान कृतिसाध्यताज्ञान निश्चयत्वा

नाहार्यत्वाप्रामाण्यग्रहाभावादीनामेकत्र निवेशो विनिगमना

विरहेणानन्तकार्यकारणभाव कल्पनापेक्षस्च मन्मते स्वतन्त्र

हेतुत्वे नैकत्राप्रामाण्यग्रहाभावादीनां निवेशेन लाघवादि

ति यद्यप्युक्तं पाकमुख्यविशेष्यकेच्छां प्रति इष्टसाधनताज्ञान-

त्वेन हेतुत्वे गौरवं तथापि न मन्मते चिकीर्षां प्रति इष्टसाधनता

ज्ञानविशिष्ट कृतिसाध्यताज्ञानत्वेन हेतुत्वे पूर्वोक्तदोषापत्तिरीत्या

उपायेच्छात्वावच्छिन्नां प्रति इष्टसाधनताज्ञानत्वेन हेतुत्वलाघ-

वात् स्वीयविशेष्यतावच्छेदकत्वं कार्यतावच्छेदकसंबंधः इष्ट

साधनत्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकत्वप्रत्यास-

त्या हेतुत्वमिति यच्च पाकेच्छां प्रति पाकः सिद्ध इतिज्ञानस्य प्रति

बंधकत्वकल्पनेन लाघवं तदपि न स्वप्रकारतानिरूपितविशे-

ष्यतावच्छेदकत्वसंबंधेन क्लृप्तप्रतिबंधकत्वेनैव निर्वाहसंभवादि-

ति, यच्च विजातीयानुमितित्वेन हेतुत्वान्नेष्टसाधनत्वज्ञानस्य

हेतुत्वं तत्र विजातीयानुमितित्वेन हेतुत्ववत् इष्टसाधनताज्ञानाद्धे-

चित् विजातीय स्मृतित्वेनापि कारणत्वमस्तु विनिगमनाविरहात्
नचेष्टसाधनताज्ञानस्य स्मृतौ उद्बोधकत्वाकल्पनान स्मृति
त्वेन हेतुत्वमिति वाच्यं। जन्यमात्रस्य कालोपाधित्वेन कालस्या
द्बोधकत्वेन तस्य कालेन उद्बोधकत्व कल्पनादिति नच विनि-
गमनाविरहात् उभयस्यापि कारणत्वमिति वाच्यं। अनुमितिमात्र
सत्वे प्रवृत्तिर्न स्यात् एवं च इष्टसाधनतालिंगककार्यतानुमितौ
इष्टसाधनताज्ञान विशिष्ट कृति साध्यता मानसे वा तादृशवैलक्षण्य
मंगीकार्यमित्यत्रापि विनिगमनाविरहः। नचानाहार्यत्वादिनिवि-
शे गौरवमेव विनिगमकमिति वाच्यं, तादृशज्ञान व्यावृत्ताया एव
तादृश जातेः स्वीकारात् किंच प्रवृत्ताविष्टसाधनताज्ञानस्य हेतुत्वा
कल्पने लाघवमित्यपि न युक्तं इष्टसाधनताज्ञानस्य हेतुत्वे पाकवि-
शेष्यक इष्टसाधनत्वप्रकारकज्ञानत्वावच्छिन्नाभाव मानसे प्रवृत्ति
सामग्र्याः प्रतिबंधकत्वं न कल्प्यते ज्ञानाभावग्रह विरहे सत् ज्ञा-
नस्यैव प्रतिबंधकत्वात् अतएवाकांक्षा ग्रंथे अन्वयानुभवेऽपि सति
अन्वयानुभवाभाव ज्ञानं नास्तीत्येवोक्तं पक्षधर मिश्रैः। भवन्मते

इष्ट साधनताज्ञानजन्य विलक्षणानुमित्युत्तरं तादृश मानसवारणाय
तादृश सामग्र्याः प्रतिबंधकत्वे महागौरवापत्तेः। न च लिङ्गोपहितलैङ्गि
मिक मानांगीकर्तृ नैयायिकानां नये विलक्षणानुमिति काले इष्ट
साधनता ज्ञानावश्यकत्वेन मयापि तादृश सामग्र्याः प्रतिबंधकत्वं
कल्प्यत इति वाच्यं, अन्यत्र तथास्वीकारेऽपि अत्र तथास्वीकारात्
साध्यत्व साधनत्वयोरैक्य मानस्यास्वीकारात्, एवं इष्ट साधनत्वा
भाववान् पाक एतादृशानुमिति सामग्र्याः पाक गोचर प्रवृत्तिं प्रति प्रति
बंधकत्वं न कल्प्यते तादृश सामग्री काले इष्ट साधनत्वाज्ञान सत्वेन
तस्य बाध मुद्रयैव प्रतिबंधकत्व संभवादिति। अपि च अप्रामाण्य
ग्राह्यवदिदमिष्ट साधनता ज्ञानं कार्यत्व व्याप्य इष्ट साधनत्ववानयं
पाक इत्याकारक समूहालंबन रूप परामर्शानंतरं यत्र इष्ट साधनता
ज्ञानं प्रमा पाकश्च कार्य इत्यनुमितिः तदनंतरं चिकीर्षा काले प्रवृत्ति
काले वा अप्रामाण्यविशिष्टेष्ट साधनता ज्ञान मानस वारणाय तत्र
चिकीर्षा सामग्री प्रवृत्ति सामग्री वा प्रतिबंधिका वाच्या अतो
गौरवापत्तेः मन्मते तादृश सामग्री काले प्रवृत्ति सामग्र्या एवाभावात्

अप्रामाण्य प्रकारक ज्ञानानास्कंदित इष्ट साधनता ज्ञान रूप कारण

विरहादिति । न चेष्ट साधनता ज्ञानस्यो हेतुत्वे प्रवृत्ति सामग्रीप्रति

बंधकतायां इष्ट साधनता ज्ञानस्य वैशिष्ट्यानि वेशे लाघवमि

ति वाच्यं इच्छा विशिष्ट इष्ट साधनीभूत पाक वानयं देशइत्या

कारक विशिष्ट विषयता शालि प्रत्यक्ष सामग्र्य प्रवृत्तौ प्रति बंध-

कतायां विशेष्यणतावच्छेदक प्रकारकज्ञान निवेशो न क्रियतेइति

लाघव संभवादिति । एवं इष्ट साधनता रत कृति साध्यता रत पाक

कालीन ज्ञानवान हामिति विशिष्ट विषयिता शालि मानसे घटादि

चाक्षुष सामग्री घटा घनुमिति सामग्री घटादि शाब्द सामग्र्यादीनां

प्रतिबंधकत्वं न कल्प्यते विशेषणतावच्छेदक प्रकारक ज्ञान मुद्रया

व्यापक प्रवृत्ति सामग्री प्रतिबंधकत्वे नैवोपपत्तेः । मवन्मते इष्ट

साधनत्वादि लिंगक कार्यतानुमिति घटित सामग्र्या अव्यापकत्वे-

नानंत घटादि चाक्षुषादि सामग्र्यास्तादृश मानसे प्रतिबंधकत्व

कल्पने महागौरवापत्तेः । न चासिद्धत्व ज्ञान कालेऽसिद्धत्व ज्ञानाभाव

घटित प्रवृत्ति सामग्र्य सत्वे घटादि चाक्षुषादि सामग्री काले तादृश

मानसापत्ति वारणाय तादृश सामग्र्याः प्रतिबंधकत्वं वाप्ये

वाच्यमिति वाच्यं, उपदर्शित मानसे असिद्धत्वेन पाकस्यविशे

षणीयतया असिद्धत्व ज्ञानकाले सिद्धत्व ज्ञाना संभवादिति नचे-

ष्ट साधनत्वाभाववान्पाक इति बाध सत्वे तादृश मानसं जायतामिति

इच्छा सत्वे घटादि चाक्षुष सामग्री सत्वे तादृश मानस वारणाय तस्याः

प्रति बंधकत्वमावश्यकमिति वाच्यं, बाधकाले मानसेच्छा सत्वे आहार्य

मान सोदयेन तादृश मानसापत्ति विरहान्न तादृश सामग्र्याः प्रतिबंध

कत्वमिति एवं इष्ट साधनत्ववत् कृति साध्यीभूत वह्नि व्याप्य धूमवान्

इष्ट साधनत्ववत्कृति साध्यीभूत पर्वत एतादृश परामर्श घटितानुमि

ति सामग्र्याः घटादि प्रत्यक्षे प्रतिबंधकत्वं न कल्प्यते वह्नि पर्वत

विषयक प्रवृत्ति सामग्रीभूत तादृश साध्य ज्ञानविशिष्ट तादृश पक्ष

ज्ञानत्वेनैव प्रतिबंधकत्वं कल्प्यते लाघवात्, मन्मते तादृशो परामर्श

स्थले प्रवृत्ति सामग्र्याः अनावश्यकत्वेन तादृश परामर्श घटित ता

दृश सिद्ध्यभाव घटितानुमिति सामग्री घटादि प्रत्यक्षेच्छा वि[रह]

विशिष्टा प्रतिबंधिका वाच्या अतो गौरवापत्तेः अस्मन्मते पराम

सिद्धयभावाद्यनिवेशे लाघव संभवात् न च सिद्धत्वज्ञान काले प्रवृत्ति सामग्री विरहेण प्रत्यक्षाद्यापत्तिवारणाय तादृशानुमिति सामग्री प्रतिबंधिका भवता वाच्येति वाच्यं। असिद्धत्वस्यापि साध्य पक्षकोटौ निवेशादिति एवं इष्ट साधनत्ववत्कृति साध्यीभूत पाककालीन ज्ञानवान् हमिति मानसे प्रवृत्ति सामग्री प्रतिबंधकता यां कृति साध्यता ज्ञानस्यानिवेशो न क्रियेत विशेषणतावच्छेदक प्रकारक ज्ञान मुद्रया तस्यावश्यकत्वादिति भवन्मते कृतिसाध्यतानुमितेरेव हेतुत्वात् तस्य निवेशस्यावश्यकत्वादत्यल्पमसङ्गेणेति सिद्धमिष्ट साधनता ज्ञानस्य प्रवृत्तौ हेतुत्वमिति। अत्र सोदलोपाध्याया: । पाक गतेष्ट साधनता ज्ञानं न हेतु: चिकीर्षां प्रति तस्याहेतुत्वात् आचिकीर्षितस्य प्रवृत्य विषयत्वेन तस्य चिकीर्षा द्वारैव हेतुत्वात् चिकीर्षापदस्य सन्नंतत्वेन सनोधात्वर्थ मुख्य विशेष्यक इच्छा वाचित्वेन धात्वर्थ मुख्य विशेष्यकेच्छां प्रति धात्वर्थ मुख्य विशेष्यक इष्ट साधनता ज्ञानत्वेन हेतुत्वात् कृतिगतेष्ट साधनता ज्ञानत्वेन हेतुत्वमिति न च कृतेर्न पाकाद्या कृतीरिष्ट

साधनमिति ज्ञान काले प्रवृत्त्यापत्तेरिति वाच्यं, पाकानुकूला कृति
रिष्ट साधनमिति ज्ञानस्यैव हेतुत्वात् एतेन पाकोन कृतिसा-
ध्य इति ज्ञान कालेऽपि प्रवृत्त्यापत्तेरिति निरस्तम्, उक्तज्ञानं पाकानुकू-
लत्वं कृतौ गृह्णन् पाकादावपि कृति साध्यत्वं विषयीकरोति
मान संवित्संबंधत्वात् न च पाकानेष्ट साधनमिति ज्ञान काले पा-
कानुकूला कृतिरिष्ट साधनमिति ज्ञान काले प्रवृत्त्यापत्तिरिति वाच्यं,
साक्षादिष्ट साधनत्वस्य कृतौ विरहात् पाकद्वारेष्टसाधनत्वमेव कृ-
त विष्ट साधनत्वं तथा च कृताविष्ट साधनत्व ज्ञान काले पाकादा-
वपि इष्ट साधनत्व ज्ञानावश्यकत्वेन तादृश ज्ञान काले पाकेनेष्ट
साधनमिति विरहान्नापत्तिरिति न च पाकानुकूला कृतिरिष्ट साधन
मिति ज्ञानस्य हेतुत्वे पाकानुकूला कृतिरित्यंशेऽप्रामाण्यग्रहाभावा-
नाहार्यत्व निश्चयत्व निवेशे गौरवमिति वाच्यं, भवन्मतेऽपि कृति साध्य-
ता ज्ञानस्यास्वतंत्र हेतुत्व अप्रामाण्य ज्ञानाभाव निर्णयत्वानाहार्यत्वा-
दिनिवेशे साम्यादिति न च साक्षात् साधनत्व ज्ञानात्परंपरा साध-
नत्व ज्ञानादपि प्रवृत्ति दर्शनात् कथं कृतीष्ट साधनता ज्ञानस्य एकन

साधनमिति ज्ञानकाले प्रवृत्त्यापत्तिरिति वाच्यं, पाकानुकूलाकृति-
रिष्ट साधनमिति ज्ञानस्यैव हेतुत्वात् एतेन पाकोन कृतिसा-
ध्य इति ज्ञान कालेऽपि प्रवृत्त्यापत्तिरिति निरस्तम्, उक्तज्ञानं पाकानुकू-
लत्वं कृतौ गृह्णन् पाकादावपि कृति साध्यत्वं विषयीकरोति
मान संवित्संबंधत्वात् न च पाकोनेष्ट साधनमिति ज्ञान काले पा-
कानुकूला कृतिरिष्ट साधनमिति ज्ञान काले प्रवृत्त्यापत्तिरिति वाच्यं,
साक्षादिष्ट साधनत्वस्य कृतौ विरहात् पाकद्वारेष्टसाधनत्वमेव कृ-
त विष्ट साधनत्वं तथाच कृतावेष्ट साधनत्व ज्ञान काले पाकादा-
वपि इष्ट साधनत्व ज्ञानावश्यकत्वेन तादृश ज्ञान काले पाकोनइष्ट
साधनमिति विरहान्नापत्तिरिति न च पाकानुकूला कृतिरिष्ट साधन
मिति ज्ञानस्य हेतुत्वे पाकानुकूला कृतिरित्यंशेऽप्रामाण्यग्रहाभावा-
नाहार्यत्व निश्चयत्व निवेशे गौरवमिति वाच्यं, भवन्मतेऽपि कृति साध्य-
ता ज्ञानस्याव्यवतंत्र हेतुत्व अप्रामाण्य ज्ञानाभाव निर्णयत्वानाहार्यत्वा-
दिनिवेशे साम्यादिति न च साक्षात्साधनत्व ज्ञानात्परंपरा साध-
नत्व ज्ञानादपि प्रवृत्ति दर्शनात् कथं कृतीष्ट साधनता ज्ञानस्य (के-

रूपेण हेतुत्वं उभय साधारणानुगत साधनत्वस्यैक्याभावादिति वाच्यं उभय साधारण साधनत्वस्यातिरिक्तस्य स्वीकारादिति वदंति तन्न पाकेष्ट साधनताज्ञानस्य प्रवृत्ति हेतुत्वे समान विशेष्यता प्रत्या सत्यैव कार्यकारणभावः कल्प्यते कृतीष्ट साधनताज्ञान हेतुतावादिमते तु प्रवृत्तिभिन्न विशेष्यकत्वान्नतथेति विषयभेदेन कार्यकारणभाव कल्पने गौरवमिति। न च तन्मतेऽपि विशेष्यता संबंधेन प्रवृत्तिं प्रति स्वीय इष्ट साधनत्वनिष्ठ प्रकारता-निरूपित कृतिनिष्ठ विशेष्यता निरूपितानुकूलत्वनिष्ठावच्छेदकता निरूपितावच्छेदकत्व संबंधेन कृतीष्ट साधनता ज्ञानस्य हेतुता कल्पने न विषयभेदेन कार्यकारणभावकल्पना गौरवमिति वाच्यम्, अन्यथा सिद्धि पंचक रहित्य विशिष्ट नियत पूर्ववर्तित्व घटितानुकूलत्व विषयतां निवेश्य कार्यकारणभाव कल्पने अन्यथासिद्धि पंचकाभावानां मिथो विशेषण विशेष्य भावे विनिगमना विरहात्। कार्यकारणभाव बाहुल्या ग्गौरवं तदपेक्ष्य प्रवृत्तिं प्रति पाकेष्ट साधनता ज्ञानस्य हेतुत्वस्यैव सम्यक्त्वात्, न च भवन्मतेऽपि अन्यथासिद्धिनिव-

लोत्तर वर्तित्वरूप कृति साध्यत्व विषयतां निवेश्य कृति साध्यता ज्ञानस्य
स्वतंत्र हेतुता कल्पने महद् गौरवमिति वाच्यं, तत्र कृत्य भाववदवृत्तित्वस्य
कृति साध्यता पदार्थत्वेन गौरवानवकाशात्. न च तथापि भवन्मते कार्य कारण
भावद्वय कल्पने गौरवमिति वाच्यम्, तन्मते उक्तानुकूलत्व विषयता निवेशेन
कार्य कारणभाव कल्पने अन्यथासिद्धं पंचकाभावानां विशेष्य विशेषणभावे
विनिगमना विरहात् पंच कार्यकारणभाव कल्पना गौरवं कारणतावच्छेदक
गौरवं च तदपेक्ष्य कार्यकारणभावद्वयकल्पने लाघवस्येति स्फुटत्वात्,
न चानुकूलत्वमतिरिक्तमेव तथा च प्रवृत्तिं प्रति कृतिनिष्ठ साधनता
ज्ञानस्य हेतुत्वे एक एव कार्यकारणभावः भवन्मते तु कार्यकारणभाव
द्वयमिति गौरवमिति वाच्यम्, ज्ञानस्थले कारणताग्राहकप्रमाणाव
तारे समान विशेष्यकत्वमेव सहकारिणे तु भिन्न विशेष्यकत्वं तस्यका
रणता ग्रहे प्रतिबंधकत्वात् तथा च पाकेष्ट साधनता ज्ञानस्य पाकः कृ-
ति साध्य एतादृशं ज्ञानस्य च समान विशेष्यकतया तयोरेव प्रवृत्ति
कारणता ग्राहक प्रमाणावतारो भवति न तु कृतीष्ट साधनता ज्ञाने तस्य
भिन्न विशेष्यकत्वात्, अत एव विधिवादे मणिकारै रुक्तम् समान

विशेष्यकत्वे लाघवमिन्नं विशेष्यत्वे गौरवमिति तत्र लाघवं कार-
णताग्रहस्य सहकारित्वं गौरवं कारणताग्रहस्य प्रतिबन्धकत्वमित्यर्थः ।
इयं रीतिस्तु यत्र समानविशेष्यकज्ञानस्य हेतुता संभवति तत्रैव अन्यत्र
तु भिन्नविशेष्यकज्ञानमपि कारणमित्यवधेयमिति पदार्थः सनो धात्वर्थ-
मुख्यविशेष्यकेच्छावाचित्वेनेत्यायुक्तं तन्न चारु सनो धात्वर्थप्रकारकेच्छा
वाचकत्वात्, तथाहि पाकं चिकीर्षतीत्यादौ पाकादिमुख्यविशेष्यकत्वे
नैव पाकः क्रियतां पाककृत्या साध्यतामित्याकारकेच्छा । स्याच्चिकी-
र्षानुभूयते द्वितीयादिविभक्तेर्मुख्यविशेष्यत्वार्थकत्वात्, न च विषय-
तामात्रमेव द्वितीयार्थोऽस्त्विति वाच्यं तथा सति पाकत्वमिच्छति पाक
त्वं चिकीर्षति शत्रुनाशेच्छाकाले शत्रुमिच्छतीत्यादेरपि प्रयोगस्यापत्तेः
न च कृतेर्मुख्यविशेष्यत्वमनुभूयते पाकादिमुख्यविशेष्यकचिकी-
र्षायां तस्य तादृशविशेष्यत्वासंभवात्, न च तर्हि कृतेः कीदृशं विषय-
त्वं सन्प्रत्ययार्थेच्छायां प्रतीयत इति वाच्यं । धातोरिच्छाप्रकारत्ववाचित्वेन
इच्छायां प्रकारिता संबन्धेनान्वयितार्थबोधकतया प्रकारितया एव
सन्नर्थेच्छायां कृतेः संसर्गतया भानात्, अथैव पाकादिवृक्षादि कृप

पचादि चिकीर्षास्थले पाकं चिकीर्षतीत्यादि प्रयोगापत्तिः न च द्वि-

तीयार्थ पाकादि विशेष्यकत्वेन कृति संसर्गतया भास मानस्य प्रका-

रित्वस्यावच्छेद्यावच्छेदक भावमानान्न दोष इति वाच्यं, कृतिसाध्यत-

या पाकेच्छायामपि साध्यत्व प्रकारितया एव पाकविशेष्यकत्वाव-

च्छिन्नतयात्रापि तादृश प्रयोगानुपपत्तेः । वस्तुतः संबंध संबंध

मानानुपगमात्कृति संबंधतया भासमान प्रकारित्वे विशेष्यतया

वच्छिन्नत्वस्य प्रकारतया संबंधतया च माना संभवः । एतेन चिकीर्षा-

यां साध्यता संबंधेन कृतेः प्रकारत्वेऽपि न निस्तार इति चेन्न द्वि-

तीयान्त समभिव्याहार स्थले द्वितीयार्थस्य पाकादि विशेष्यत्वस्ये-

च्छायां प्रकारतयैवाकांक्षा बलात् तदवच्छिन्नत्वस्य प्रकारतानिष्ठ-

संबंधतावच्छेदकतया मानोपगमेन दोषात्, ननु पाकं चिकीर्षति

इत्यादौ प्रकारतैव द्वितीयार्थोऽस्तु धात्वर्थ विशेष्यतैवेच्छायां भासतां

पूर्ववत्प्रकारता विशेष्यतयोरवच्छेद्यावच्छेदक भावा मानोपगमात्

पाकादि चिकीर्षायां कृत्यादि विषयकत्वस्य पाकत्वादि प्रकारता-

नवच्छिन्नतया न पाकत्वं चिकीर्षतीत्यादि प्रयोगः न चैवं गृहादि

प्रकारकोऽस्त्वित्यादिगोचरेच्छादशायां गृहं तीर्षास्तीत्यादिप्रयोगा-

पत्तौरिति वाच्यं भवतामपि गृहीत्यादिप्रकारेण गृहादि मुख्यगोचरेच्छा-

दशायां तादृश प्रयोगापत्ते दुर्वारत्वात् नच सकर्मक धातूत्तर सन्

प्रत्ययापस्थापितेच्छायामेव कर्म प्रत्ययस्य स्वार्थान्वय बोधोपपादि-

काकांक्षा स्वीकारान्न दोष इति वाच्यं ममापीत्थं सुवचत्वात्, वस्तु

तस्तु कर्मता संबंधावच्छिन्न प्रकारता द्वितीयादि रूप कर्म प्रत्ययेन

सन्नर्थेच्छायां प्रतिपाद्यत इति व्युत्पत्तेः गृहादौ स्वीति गोचरेच्छायां

चाधेयता संबंधेनैव गृहादेः स्वित्याद्यंशे प्रकारतया न गृहं ति-

र्षासतीत्यादयः प्रयोगाः। परन्तु सन् प्रत्यय समभिव्याहारस्थले प्रकृत्य-

र्थ एव द्वितीयादि कर्म प्रत्ययार्थान्वयः न तु सन्नर्थेच्छायामेवान्वय

इति व्युत्पत्तेर्न गृहं तितीर्षासतीत्यादि प्रयोगापत्तिः प्रकृत्यर्थस्य तत्रा-

कर्मकत्वात् पाकं चिकीर्षतीत्यादौ च साध्यतया विषयत्व रूपं कृति-

कर्मत्व द्वितीयार्थः अतो न पाकं चिकीर्षतीतिवत् पाकत्वं चिकीर्षती-

त्यादयः प्रयोगा इति तत्रा गगन दर्शनं भवत्वित्यादीच्छा बोधकस्य

गगनं दिदृक्षते इत्यस्य विशेष दर्शि वाक्यस्य प्रामाण्यानुपपत्तेः।

दर्शने गगनकर्मकत्व बाधात् तत्र परविषयकत्वेन वस्तुगत्या घट

विषयक दर्शनस्येच्छा विषयता तत्र घटं दिदृक्षत इति प्रयोगा-

पत्तेश्च न च तत्र घटकर्मकत्व विशिष्ट दर्शन विषयितेच्छायां

भासते इति नियमादुक्तेच्छायां च तादृश विशेष्य विषयकत्वस्य

बाधान्नाति प्रसंग इति वाच्यं एवमपि तत्र घटोदिदृक्ष्यते इति

प्रयोगस्य दुर्वारत्वात् इच्छाविषयीभूत दर्शन कर्मत्वस्य घट

प्रतीयमानस्या बाधादित्युक्त प्रकार एव रमणीय इति चेन्मैवं पा-

कं चिकीर्षतीत्यादि वाक्य जन्यशाब्दबोधे पाकादि विशेष्यकत्वा

वगाहितया अनुभवसिद्धत्वेन सनो धात्वर्थ प्रकारकेच्छावाच-

त्वस्यावश्यकत्वात् धात्वर्थ विशेष्यकेच्छा बोधकत्वसंभवेपि

तत्प्रकारकेच्छावाचित्वे बाधकाभावेन पाकं कृत्या साधयामीती-

च्छायाश्चिकीर्षा पदार्थत्व निराकरणा योगाच्च न च पाकं कृत्या

साधयामीति कथं चिकीर्षाकारोपि तादृश शब्देनेच्छा विषय-

स्य कृति साध्यता विशिष्ट पाकस्याबोधनात् आत्मनि कृतिकार-

ण पाकसिद्ध्यनुकूल व्यापारस्यैव ततः प्रतीतेरिति वाच्यं आत्म

नि पाकसिद्ध्यनुकूल कृति रूप व्यापारबोधे पाकोपि स्वकृत्यधीन
सिद्धिकत्व रूपं स्वकृति साध्यत्वस्य तुल्य विनिर्देशतया माने
न तादृश वाक्यस्य चिकीर्षा विशिष्टबोधकत्वात् कृति रूपव्या-
पारस्य निजफललाभाय कृत्येति कल्पनात्. एतेन कृतीच्छायाः
कृति हेतुत्वे कृतिं प्रति जिज्ञासा विशिष्ट ज्ञान सामग्र्याः प्रति
बंधकत्वा कल्पने लाघवे तादृश सामग्री काले कृतीच्छाया अ-
सत्वे तादृश कारणाभावादेव तदनुत्पत्तेः तत्सत्वे कृति साम-
ग्र्याइच्छा घटितया जिज्ञासा सहित ज्ञानसामग्रीतोपि बलवत्तया
कृतेरेवोत्पत्तेः न च ज्ञान प्रकृत्यार्युगपदुत्पादोपगमे कृति विरहा-
त्तादृश सामग्री प्रतिबंधकत्वं कृति साध्यत्व प्रकारकेच्छायाः प्रवर्त-
कतावादि नापि न स्वीक्रियते इति लाघवमिति वाच्यम् जिज्ञासा
नंतरं ज्ञानस्यैवानुभवेन प्रवृत्त्यभावस्यानुभवसिद्धतया तदनुरो-
धेन प्रवृत्तौ तादृश सामग्री प्रतिबंधकत्व कल्पनस्यावश्यकत्वात्
अनुभवानादरे ज्ञानं प्रति विजातीय ज्ञान सामग्री प्रतिबंधकता-
या अपि विलय प्रसंगादिति सौ दंडी वाद्यापानुपायिमतमपि

निरस्तं । अनुभवानुरोधादेव पाकं कृत्वा साधयामीति कृतिसाध्य-
त्वप्रकारक पाकविशेष्यकेच्छाया अपि प्रवर्तकत्वस्यानुभवानुरो-
धेनावश्यकत्वात् तदनादरे चोक्त रीत्या कृतीच्छाया अपि हेतुत्वा-
सिद्धेरिति संक्षेपः । यत्तु इष्टसाधनत्वस्य विध्यर्थत्वेन कलंजं
भक्षयेदित्यादौ लिङो निष्ठ साधनत्वे लक्षणा नञ्पदं तात्पर्य
ग्राहकमित्येव वाच्यम्, तच्च संगतं तथासति ज्योतिष्टोमेन य-
जेतेति लौकिकवाक्यस्यापि प्रामाण्यापत्तेः कृत्या स्वर्गसाधनत्वा
वगमेपि तात्कालिकानिष्ठ साधनत्वस्य यागे बाधकाभावादिति
तदप्यसत्, न कलंजमित्यादौ लिङो निष्ठ साधनत्वे निरूढला-
क्षणिकत्वात् ज्योतिष्टोमेन न यजेतत्यत्र निषिद्धलक्षणांगी
कारस्याभुक्तत्वात् अन्यथा घट पटत्वमित्यादि वाक्यस्यापि घटादि
पदस्य पदादिलाक्षणिकतया प्रामाण्यापत्तेस्तत्रापि दुर्वारत्वात्, यद
पि लिङ् इष्टसाधनतार्थकत्वे लिङ् शब्देष्ट साधनताशब्दयोः पर्याय
तापत्तिरिति तदप्यसत् लिङ् पदत्वात् इष्ट साधनताशब्दस्य वाच्यत्वात्
लिङ् शब्दादिष्ट साधनत्वत्वेनेष्ट साधनता बोधादिष्ट साधनता शब्दा

द्येष्ट साधन वृत्ति धर्मत्वेन तद्बोधतात्पर्यविषयत्वस्य प्रसत्त्यभावाच्च।
यदपि अन्येष्ट साधनेऽन्यस्य प्रवृत्त्यभावेन मदिष्ट साधनताज्ञान-
स्यैव प्रवृत्ति जनकत्वं वाच्यं तथा च नेष्ट साधनत्वे लिङर्थः प्रवृत्ति
जनक ज्ञान विषयस्यैव लिङर्थत्वात् प्रवृत्ति जनकस्य मदंशान्तर्भावेन
तादृश ज्ञानस्य च विधिवाक्याद् सम्भवात्, मदंतर्भावेण शक्तौ
शक्त्यानन्त्यापत्तेरितितदप्यसत् प्रवृत्ति प्रयोजकज्ञानविषयस्यैव
लिङर्थतया विधितइष्ट साधनत्वोपस्थितौ प्रवर्तकस्य मदंतर्भावेणतज्ज्ञा-
नस्य मनसा सम्भवात्, किंच यद्विशेषयोरितिन्यायेनेष्टसाधनता
ज्ञानत्वेन प्रवृत्तित्वेन हेतुहेतुमद्भावस्यावश्यकतया प्रवृत्ति जनकस्य
सामान्यत इष्ट साधनता ज्ञानस्य विधिजन्यत्व संभवेन प्रवृत्तिजनक
ज्ञान विषयस्यालिङर्थत्वेऽपि तत्र शक्तौ बाधकाभावात् तस्मादिष्टसाध-
नत्वं विध्यर्थ इति सिद्धम् अत्र इष्टं क्वचित्साक्षात्कर्तुरेव क्वचिच्च
परंपरया अतएवाचार्य प्रेरणया प्रवृत्तौ आचार्येष्टस्य परंपरया विशि-
ष्टेष्टतया तत् साधनता ज्ञानात् शिष्योदर्गवानयनादौ प्रवृत्तिः आचा-
र्य प्रेरणयाऽहं गामानयामि न किंचिन्ममेष्टमिति व्यवहारश्च न मे

साक्षात्कारोचीदिष्टमित्येवं परत्या संगमनीयइति केचिद् वदंति ।

वस्तुतस्तु सर्वमिष्टं साक्षात्कर्तुरेव आचार्य प्रेरणया प्रवृत्तावपि आचार्य

प्रसादादिकं सम्यक् शिष्यादेरिष्टमस्तीति न दोषः उपदर्शितव्यवहार-

श्चाचार्य प्रासा चातिरिक्तं दुग्धपानादिकमिष्टं मेनास्तीत्येवं परत-

या संगमनीयः गुर्वादि प्रीति वलोदेवलात् कोपा धपनि पितद

भावप्रयुक्त गुर्वादिक्रोधजन्य ताडनाभाव एवेष्टं इति तत्साधनता ज्ञाना-

त्प्रवृत्तिः तात्विष्ट साधनताज्ञानं न प्रवर्तकं अनिष्ट साधन इच्छा सावेत्त

पि कष्टं कर्मेति न्यायेन इच्छा देव प्रवृत्य भावापत्तेरिति तन्मज्ञांत-

रालिक द्वेष इच्छा भाव दशायां प्रवृत्त्यापत्तेः । न च चिकीर्षाया असत्त्वे-

त्वेतदभावादेव न प्रवृत्तिः तत्सत्वे चेष्टापत्तिरिति वाच्यं इष्टसाधन-

ताज्ञानस्योपायेच्छां प्रति हेतुतयेष्ट साधनत्व ज्ञानाच्चिकीर्षाया एवा-

संभवात्, नह्युपायेच्छां प्रतीष्ट साधनताज्ञानस्य हेतुत्वमसंभवि

उपायत्वस्यैच्छा विषयत्वस्य चाननुगमात् न च पाकेच्छां प्रति

इच्छा विषय एव साधनता ज्ञानं हेतुरित्येवं रीत्या तत्संभव इति वाच्यं

कालांतरीय पुरुषांतरीयेच्छाभादायाति प्रसंगवारणाय तत्रकाली-

नत्व तत्तद्रूपीयत्व निवेशस्यावश्यकतयाऽननुगमतादवस्थ्यात्
इच्छाविषयत्वाज्ञानेऽपि स्वरूपसत्सुखेच्छा सुख साधनताभ्यां
पाकेच्छोत्पत्तेश्च, न च पाकेच्छां प्रति सुखेच्छात्वेन सुखसाधनता
ज्ञानत्वेन च हेतुत्वान्नोक्तदोष इति वाच्यं, दुःखाभावेच्छाऽदुःखा
भाव साधनताज्ञानाभ्यामपि पाकेच्छोत्पत्त्या व्यभिचारप्रसंगा
दिति चेन्न स्वसामानाधिकरण्य स्वाव्यवहितोत्तरक्षणोत्पत्ति-
कत्वोभय संबंधेन सुखेच्छा सुख साधनं पाक इति ज्ञानोभयविशि-
ष्टेच्छां प्रति सुखेच्छात्वेन सुख साधनताज्ञानत्वेन च हेतुत्वोपगमात्
एवं दुःखाभावेच्छा दुःखाभाव साधनताज्ञानादीनामपि हेतुत्वं बोध्यं न च
सुखेच्छा वैशिष्ट्यं सुखेच्छा जन्यतावच्छेदके निवेशितं तस्य सुख
साधनताज्ञान जन्यतावच्छेदके निवेशे प्रयोजनाभावः एवं वैपरीत्येनापीति
वाच्यं, कार्यतावच्छेदकयोर्व्याप्यव्यापकभाव एव कारणयोः परस्पर सह-
कारितास्वीकारेण परस्पर जन्यतावच्छेदककोटौ परस्पर वैशिष्ट्य
निवेशस्यावश्यकत्वात्. अन्ये तु तादृश संबंधेन स्वस्ववैशिष्ट्यमेवस्व
स्वकार्यतावच्छेदककोटौ निवेशनीयम् कार्यतावच्छेदकयोर्व्याप्य व्यापक भाव

विरहेऽपि सामानाधिकरण्य मात्रेणैव कारणानां परस्पर सहकारित्व

स्वीकारादित्याहुः, स्वतंत्रतास्तु फलसाधनत्वस्यापि विज्ञान जन्येच्छायां प्रका-

रत्वाभ्युपगमात् सुख साधनत्व प्रकारता निरूपिता या पाकत्वावच्छिन्नोद्देश्य

ता तच्छालीच्छां प्रति सुखेच्छात्वेन सुख साधनताज्ञानत्वेनच हेतुत्वम्

यद्वा सुखसाधनता ज्ञानस्यैव एतादृशेच्छात्वावच्छिन्नं प्रति हेतुत्वं सुखे

च्छायास्तु सुख साधनता धी जन्येच्छात्वावच्छिन्नं प्रतीत्याहुः तत्फल

साधनत्वस्य स्वविशेष्यकज्ञान जन्येच्छायां प्रकारत्वे मानाभावात्, य

दापि सुखेच्छादि जन्यतावच्छेदका जाति विशेषा एव स्वीक्रियंते

सुख दुःखा भावयोरिच्छा तत्तत्साधनता ज्ञाने च यदा वर्त्तते तद्वृत्त

मिच्छाद्वयमेव स्वीक्रियते प्रयत्न यौग पद्यवादेच्छा यौग पद्य स्वीकार

अतस्तत्र न सांकर्यमिति नवीनैरुक्तं तदपि चिंत्यं। एतादृशानंत ज

मानाभावात् अन्यथा तत्तत्स्मृति जनकतावच्छेदकतया जाति सि

र यौग पद्योः स्वीकारेणैवोपपत्तौ संस्कारे साविषयकत्वासि

प्रसंगात्. किंच यदा शत तत्फलोपाय फल भूत व्यक्तिषु इच्छा तत्फ कोऽ

मृत तत्तत्सुखं तत्तद्व्यक्तित्वेन विषयीकृत्याश्वमांसस्वत्व ध्वं

च्छात्मकत्यागरूपाश्च मेध सामग्रीच तदा तादृशशतेच्छोत्पत्त्या विनि

गमनाविरहेण सर्वासामेवाश्वमेधत्वात्तत्कर्तुः शतक्रतुत्वापत्तिः अपि तु

प्रकारता संबंधेनेच्छा विशेष्यावच्छिन्न कार्यतानिरूपित साधनत्वनिष्ठ

प्रकारता निरूपित विशेष्यतावच्छेदकता संबंधेन ज्ञानत्वेन कारणता प्र-

कारता संबंधेनेच्छात्वेन कार्यतेति न व्यभिचारो न वा पाकत्वादि

भेदेन भिन्न कारणता अथ चेच्छा विषये विशेषण ज्ञाने उपलक्षणं

तेन फलेच्छा विरह दशायां नोपायेच्छापत्तिर्न वेष्ट साधनता ज्ञानेच्छा

या अविषयीकरणेऽप्युपायेच्छानुपपत्तिः इत्थं चोपायेच्छायां फलेच्छा

याः स्वातंत्र्येण कारणत्वोपगमो निरस्तः कारणतावच्छेदक विशिष्ट

कारणस्य कार्योत्पत्ति पूर्वकालेऽपेक्षणीय तया फलेच्छाविरह काले

उपायेच्छापत्त्यभावात्, न चोक्त विशेष्यतावच्छेदकता संबंधेन

ज्ञानं विनापि प्रकारता संबंधेन सुखत्व दुःखाभावत्वयोरिच्छोत्पत्त्या

व्यभिचार इति वाच्यं, सुखत्व दुःखाभावत्वान्य वृत्तित्व विशिष्ट प्रकार-

तया एव कार्यतावच्छेदक संबंधत्वोपगमेन व्यभिचाराभावात्, न

चैवं यत्र सुखत्व दुःखाभावत्वे धर्मितावच्छेदकी कृत्येष्ट साधनता

ज्ञानं वर्त्ततम सुखत्व दुःखाभावत्वयोः सुखत्व दुःखाभावत्वान्यव

च्छिन्न विशिष्ट प्रकारता संबंधेनेच्छापत्तीरिति वाच्यं सुखं सुखमि-

त्यादितः शाब्दबोधवारणाय सुखत्वाद्यन्य वृत्ति विषयता संब-

न्धेन ज्ञानं प्रति सुखत्वादिभेदत्वेन कारणताकल्पने गुणत्वस्यैव

कार्यतावच्छेदकत्वोपगमेनोक्तापत्त्यभावादिति प्राहुरित्यादिक

तच्चेष्टसाधनत्वं स्वर्गादिसाधनत्वत्वेनैव लिङः शक्यं तेन

रूपेण ज्ञानादेव प्रवृत्यावश्यैव प्रवर्तकत्वात्, नातिष्टसाधनत्व-

त्वेन इच्छायाः स्वरूपसत्या एव हेतुत्वेन तज्ज्ञानानपेक्षणात्, बहुवित्त

व्ययायास साध्ये आमुष्मिकेच विशेष्य तद्ज्ञानं विना प्रवृत्त्यभा-

वाच्च, न चैवं लिङो नानार्थत्वापत्तीरिति वाच्यं, तदापि पदबुद्धि

विषयतावच्छेदकत्वस्यैवात्रापि शक्यतावच्छेदकानां स्वर्गादीनामिच्छा

या विषयतया अनुगमकत्वात्, तथाहि यथा तदादि पदे तदादि

पदं बुद्धि विषयतावच्छेदकवति शक्तमित्याकारकः शक्तिग्रहः बुद्धि

विषयतावच्छेदकत्वमुपलक्षणतया घटत्वादीनामनुगमकं न तु तदं-

शे शक्तिः पदार्थोपाध्यीतिस्तु प्रकरणादि महिम्ना घटत्वादिनैव

ननु बुद्धिविषयतावच्छेदकत्वस्योपस्थितौ शाब्दबोधे वा मानं तथा

प्रकृतेपि लिङादिपदमिच्छाविषयतावच्छेदकत्व साधनत्वे शक्तमित्या-

कारकः शक्तिग्रहः इच्छाविषयतावच्छेदकत्वं स्वर्गत्वादीनामुपलक्ष-

णतयानुगमकं न तु तदंशे शक्तिः पदार्थोपस्थितिस्तु समभिव्या-

हृत स्वर्गादिपदमहिम्ना स्वर्गादि साधनत्वेनैव नातिव्याप्त्या उप-

स्थितौ शाब्दबोधे वा मानं इत्यंच विशिष्येष्टतावच्छेदकस्वर्ग-

त्वादिप्रकारेण शाब्दबोधोस्त्या विधिवाक्यात्प्रवर्तकज्ञाननिर्वा-

हः एवं चेच्छाविषयतावच्छेदकत्वोपलक्षित स्वर्गत्वादिविशिष्ट

साधनत्वे विधेः शक्तिरिति पर्यवसन्नं न चैतस्य स्वर्गकामादि

पदात्लाभेनानन्यलभ्यतया न तत्र शक्तिरिति वाच्यं तस्मात्स्वर्गा-

द्युपस्थितावपि साधनत्वबोधकाभावात्, न चैवं साधनत्व एव

शक्तिरस्तामिति वाच्यं, तस्य कार्यतावच्छेदकविशेषकार्यनियं-

त्रितत्वेन सामान्यतस्तस्यैकस्याभावात्, नाविष्ट साधनत्वस्य

विध्यर्थत्वे ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ तृतीयानुपप-

त्तिः ताद्विधायक कर्तृकरणयोरिति सूत्रस्यानभिहिताधिकारीय-

त्वेन करणत्वानभिधान एव तद्विधानेन लिङ्जतदभिधाने तृतीयाया असंभवात्, न च यजर्थयागगत साधनत्वे लिङभिधानेपि तद्विशेष- ज्योतिष्टोमादि प्रातिपदिकार्थ गतस्य तस्यानभिधान्न तृतीयानुपपत्ति रितिवाच्यं, ज्योतिष्टोम यज्यर्थ यागयोरभेदादिति चेन्न। लिङ्सा- धनत्वमात्राभिधानेपि तद्विशेषकरणत्वस्यानभिधानात्। नन्वेवमपि लिङादिना ज्योतिष्टोमादौ स्वर्गत्वविशिष्ट साधनत्वं कथं बोध्यनीयं स्वर्गत्वादेर्गंगा स्नान वा जपे यादि जन्य स्वर्गादि साधारणत्वेन ज्यो तिष्टोमादि जन्यतावच्छेदकत्वा संभवेन तत्र स्वर्गत्वादिविशिष्ट सा- धनत्व बाधादिति चेन्न। विजातीय तत्त साधनत्वस्यैव विधिना बोध- नात् वैजात्यं च विधेस्तथाशक्ते स्वीकारादेवोपास्थितं एतदर्थमेव च लिङ् लिङादेस्त त्तसाधनत्वे शक्ति स्वीकारात्, केचित्तु स्वर्गत्वादिक मेव ज्योतिष्टोमादि जन्यतावच्छेदकं अतिप्रसक्तस्याप्यवच्छेदकत्वे बाधकाभावत्। नन्वेवं स्वर्गत्वावच्छिन्नस्य ज्योतिष्टोमादि रूपकार- णाभावाद् गंगास्नानादितोनुत्पत्तिः प्रसंगः उत्पत्तौ च घटादौ रासभ वद्व्यभिचारात् ज्योतिष्टोमादेरकारणत्व प्रसंगः एवं गुवसमवापि

कारणतावच्छेदकत्वस्य द्रव्यत्वेनांगीकारेण सत्तायामेवांगीकारे गुणादावपि कृत्याद्यापत्तेरिति नाति प्रसक्तमवच्छेदकामितिचेन्न ज्योतिष्टोमादिजन्यापूर्वविशिष्टसमवाय संबंधेन स्वर्गत्वावच्छिन्नं प्रति ज्योतिष्टोमादेः कारणत्वोपगमेनादोषात्, एवं तृणादेरपि कृतृणत्वाद्यवच्छिन्न संयोग संबंधेन वह्नित्वावच्छिन्नं प्रति तृणत्वादिना हेतुतेति न तत्रापि वैजात्य कल्पना। अतएव व्रीहिभिर्यजेत यवैर्यजेतेत्यादौ परस्पर व्यतिरेकेण प्रत्येक फलजनकत्वेऽपि न दोषः व्रीहिभिर्यक्ष्य इति संकल्पापूर्वावच्छिन्न समवाय संबंधस्यैव व्रीहि कार्यतावच्छेदकत्वे नादोषात्, संकल्पापूर्वं च फलाप्रवृत्तौ नष्टमिति प्रयोगांतरे यवादीनामुपादानं नानुपपन्नं, न चैवं रासभादेरपि घट हेतुत्वापत्तिः रासभाद्यवच्छिन्नसंयोगस्य कार्यतावच्छेदकत्वोपगमेन व्यभिचाराभावादिति वाच्यं, यवादेः शक्त्यातृणादेरन्वय व्यतिरेकाभ्यां हेतुता सिद्धावपि रासभादेर्हेतुत्वे मानाभावात्, किन्त्ववश्यकल्पनीय दंडादिभिरन्यथासिद्धेश्च एवं गुणादौ कृत्यापत्तेरपि न तत्त द्रूपे तत्त द्रव्य-

एव समवायिकारणतया आवश्यकत्वेन विशेषसामग्र्यभावा-
देव तदभावोपपत्तेरित्याहुः अपरे तु कंबुग्रीवादि मान्नास्तीत्यादौ
गुरुधर्मानवच्छेदकत्वपक्षे घटत्वावच्छिन्न प्रतियोगितायाः एव
संबंधत्ववदत्रापि विजातीयस्वर्ग समानाधिकरणात्यंताभावप्र-
तियोगितावच्छेदकत्वत्वावच्छिन्न प्रतियोगिताकत्व संबंधेन
स्वर्ग समानाधिकरणाभाव प्रतियोगितावच्छेदकत्वे योगमावः प्र-
तीयत इति नानुपपत्तिः अन्वयितावच्छेदकावच्छिन्न प्रतियोगिता
कत्व व्युत्पत्तिश्च नञ समभिव्याहारस्थल एवेति न विरोध इति
प्राहुरिति दिक्। न्यास्तु अनन्यथासिद्ध तदभाववदवृत्ति
स्वरूप तत्साध्यत्व घटित साध्येष्टकत्वज्ञानमेव लाघवात्प्रवृत्ते
हेतुरिति साध्येष्टकत्वमेव लाघ्य स्वर्गादिकत्व पर्यवसितं
लिङाद्यर्थः। युज्यते चैतत् अन्यथोपदर्शित रीत्या ज्योतिष्टोमा-
दिकं विनापि गंगास्नानादितः स्वर्गादि क्वचित् इति व्यभिचारज्ञान
सत्वे न लिङादेरिष्ट साधनताया बोधना संभवात्, साध्येष्टक-
त्वस्य लिङाद्यर्थत्वे तु इष्टत्व सामानाधिकरण्येन ज्योतिष्टोमादे

मदक्षेत्त्वरूपतत्साध्यत्व घटित साध्येष्टकत्वज्ञानमेवत्वन्या वृत्तित्वग्रहे

बाधकाभावः। द्रव्यं गंधवादिति ग्रहेऽपि सामानाधिकरण्येन द्रव्यं गंधा-

भाववादिति ग्रहादितिवदंति। अथेष्टसाधनत्वं साध्येष्टकत्वं वा

न लिङाद्यर्थः नित्यनैमित्तिकयोः फलाभावेन तदसंभवादिति चेन्न

प्रत्यवाय परिहार रूप फलस्य तत्रापि सत्वात्। शास्त्रबलेन तदकरणे

प्राप्तस्य प्रत्यवायस्य तत्करणे परिहारावश्यंभावात्, न च वेदबोधि

तत्वेन निष्फलयोरेवतयोः प्रवृत्तेरिति वाच्यं। वेद सहस्रैरपि बोधिते

निष्फलत्वज्ञान दशायामप्रवृत्तेः न चैवमफलाकांक्षिभिर्यज्ञो

विधि दृष्टोय इज्यते। यष्टव्यमेवेति मनः समाधाय ससात्विक इति

भगवद्वचनविरोध इति वाच्यं। यज्ञो दानतपः कर्म पावनानि मनीषिणां।

एतान्यपि तु कर्माणि संगत्यक्त्वा फलानि च। कर्तव्यानीति मे पार्थ निश्चितं

मतमुत्तमम् इत्यग्रादेशे भगवतैव पावनत्वोक्तेः तस्मादनुदिष्टेऽपि

प्रत्यवाय परिहारः फलमिति फलं त्यक्त्वापि क्रियमाणस्य पावनत्व

मिति न तदाशयः। संध्यामुपासते ये तु सततं शंसितव्रताः

विधूत पापास्ते यांति ब्रह्मलोकं सनातनम्

इति क्वाचिन्नित्येऽपि फलश्रवणाच्च। न चार्थवादात्मकमुक्तवचनं

स्तावकं स्तुतिश्च प्ररोचनार्था सा च पुरुषप्रवृत्त्यर्थेति वाच्यं । तथा सति

सर्वेभ्यः कामेभ्यो दर्शपूर्णमासावित्यादेरपि तथात्वापत्तेः चतुर्थी तु

ऊर्जे वहध्यै इत्यादयर्थवादे चतुर्थीवितनार्थ साधिका दर्शपूर्णमासा-

भ्यां स्वर्गकामो यजेतेत्यादिभिः फलाकांक्षानिवृत्तेश्चेत्यलं पल्लवेन ।

ननु तथापि स्वर्गकामो यजेतेति विधिना यागे स्वर्ग साधनत्वबोधोऽनुप

पन्नः देवतोद्देशेन द्रव्यत्यागरूपस्य यागस्येच्छारूपतया कालांतर

भावि स्वर्ग पर्यंतमसत्वेन स्वर्गाव्यवहित पूर्वकालवर्तित्व घटितस्य

स्वर्गसाधनत्वस्यासंभवात् । न च यागस्य साक्षात्स्वर्ग साधनत्वासं-

भवेपि अपूर्वरूपव्यापार द्वारा स्वर्ग साधनत्वं संभवत्येवेति वाच्यं ।

तदानीं तादृश व्यापारानुपस्थित्या तद्द्वारापि स्वर्ग साधनत्वस्य बोधा-

संभवादिति चेन्न साक्षात्परंपरासाधारण्येन साधनत्वस्य स्वरूप

संबंधरूपतया कार्यानियत पूर्ववर्तित्वरूपतया पदार्थांतररूपतया

वा विधिना यागे सामान्यतः स्वर्गसाधनत्वेन स्वर्गसाधनत्वे

बोधिते पश्चात्तान्नि यामकस्य स्वर्गाव्यवहित पूर्वकालवर्तित्वस्य

बाधप्रतिसंधानेन स्वर्ग साधनत्वानुपपत्ति प्रतिसंधाने तदु

पपादकतया स्वर्ग पर्यंत स्थायि प्रविहप व्यापार कत्वेन नो दोषात ।

अत्रेदं विचार्यते विधेर पूर्व बोधकतास्ति न वेति तत्रापूर्वं कल्प्य-

मिति वादिनां न्यायविदां मतमस्तीति सिद्धान्तः । अपूर्वं न कल्प्यं

किन्तु वाच्यमिति वदतः प्राभाकरास्तु स्वर्गकामो यजेतेत्यादि काला-

न्तरभावि फलकाम समभिव्याहृत वैदिकविधेर पूर्व बोधकतां स्वी

कुर्वन्ति तं बोधमित्याशयं वर्णयन्ति अभियुक्ताः फलकामनाक्रियायां

कामिनं नियोजयति प्रवर्तक धीमंतं करोतीति व्युत्पत्त्या कामी नि-

योज्य इत्युच्यते । नियोज्यत्वं च तस्य ममेदं कार्यमिति धर्मत्वमेव

यागादि क्रियायां च तेन रूपेण स्वर्गादि फलकामस्यान्वयः । अथ कि

मर्थं नियोज्यतया कामिनोऽन्वयः स्वीक्रियते कर्तृत्वेनैवास्मा सतां

आवश्यकं च कृति विशेष्यतया तज्ज्ञानं भावनया विशेष्यतयान्व-

यित्वस्य सर्वान्वय नियामकत्वात् । आख्यातपाद्य भावनाविशे-

ष्यएव प्रथमायाः साधुत्वात् । न च स्वर्गकाम कार्यत्वस्य क्रिया-

यामन्वये स्वर्गकाम नियोज्यकत्वं प्रयोजकं स्वर्गकाम कर्तृताज्ञाने

विषयत्वं विना यागादेस्तत्कृति साध्यत्व निर्वाहात् इत्यन्वय प्रयो-

जकरूपलक्षणयोग्यताज्ञानविषया स्वर्गकामनियोज्यकत्वबोधः

स्वर्गकामकार्यत्वबोधे अपेक्षित इति मणिकारेणापि नाहत्य क्रिया

कार्यतया लिङा बोधयितुं शक्यते स्वर्गकामनियोज्यान्वययोग्य-

ताज्ञानविरहादित्यनेन प्रथमतः कार्यताबोधना संभवे हेतुविध-

यानियोज्यत्वबोधसामग्री विरहोऽपीहित एतदभिप्रेत्यैवेति

वाच्यम् । यतः कर्तृत्वबोधे योग्यताज्ञानविषयानियोज्यत्वमानापे-

क्षा प्राभाकरैर्नाभ्युपेयेत पचतीत्यादौ लडाख्यातेऽपि तत्स्वीकारापत्तेः । एवंच

क्रियायां कामिकार्यताबोधोऽपि कामिनः कर्तृत्वबोधपर्यवसितः विशे-

ष्यविशेषणभावमात्रवैपरीत्यादिति तुल्ययुक्त्या तत्रापि कामिनो नियो-

ज्यतया भानमनपेक्षितमेवेति चेत् स्वर्गकामना विशिष्टस्य हि कर्तृत्वे

नान्वयो न संभवति कामनारूप विशेषणांशे तदन्वयस्यौत्सर्गिकत्वस्या-

संभवात् । अथ चैत्रः पचतीत्यादावन्वयितावच्छेदक चैत्रत्वादेः कर्तृ-

त्व बाधेऽपि यथा तदुपलक्षिते धर्मिणि कर्तृतान्वयस्तथा प्रकृतेऽपि

कामिनो फलसते पुंसि तदन्वयो निःप्रत्यूह एव विशेषणान्वयानन्वयित्व

रूपोपलक्षणत्वेऽपि तस्याः ब्राह्मणत्वादिवत् स्वतः कर्तृव्यावर्तकता

संभवत्वे चेति नि: कामसाधारण कर्तृत्वान्वय प्रसंगो वारणीय इति चेन्न
विशेषान्वय परतायां वेदस्यौत्सर्गिकतया संभवत्यां कथंचिद्विशे-
षणतायामुपलक्षणताभ्युपगमस्यानौचित्यात् । न च विशेषान्वयि-
ता कर्तृत्वेन कामनाया अभ्युपगमेनान्वयेऽपि तत्समान कालतया
तस्याविशेषणत्वमास्तां दंडी गच्छतीत्यादौ गमन कर्तृत्वाद्यन्वये
दंडादेर्विशेषणत्ववदिति वाच्यं । विशेष्यो पर्यभ्युपगमेनान्विते वि-
शेषणस्याभ्युपगमेनैव विशेषणत्वस्यौत्सर्गिकतया त्यागायोगात्
कृति क्षणे उपायार्थे कीर्षया अंतरितया: फलकामनाया असत्वेन तत्-
समान कालतया अपि तस्या असंभवात् । नियोज्यत्वेन कामिनो
अन्वयं च ममेदं कार्यमिति ज्ञानप्रयोजकत्वरूप नियोज्यत्वस्य काम-
नांशेऽपि सत्वाद्विशेष्यान्वयो निराबाध: काम्य साधनता ज्ञानस्य क-
र्तव्यतानुमापकतया कामनायास्तत्प्रयोजकत्वात् । अत एव माख्याता
र्थ कृतेरपि प्रयोजकता संबंधेन कामना विशेष्ये अन्वय संभवात्
नियोज्यत्वेन कामिन: अन्वयो विफल: कृति साध्यता ज्ञानस्य कामना
प्रयोज्यत्वे तत् द्वारा कृतेरपि कामना प्रयोज्यत्वादिति । न चाविनि-

गमनाविरहेण नियोज्यतयाप्यन्वयोनिः प्रत्यूह इतिवाच्यं।

नियोज्यत्वेनान्वयेपि कर्तृत्वेनान्वयस्य प्रथमायाः साधुत्व नियाम

कत्वेनावश्यकत्वामिति प्रागेवोक्तत्वादिति चेत्। आस्तां प्रथमा

साधुता निर्वाह कत्वेन कर्तृतयाकामिनोन्वयस्तथापि तदनुरो-

धेनैव नियोज्यत्वमानमावश्यकं विशेष्यान्वयानुरोधात्

प्रयोजकता संबंधेन कृतरन्वय बोधोपगमेताहशान्वय प्रयोजकनि-

योज्यता ज्ञानमपि योग्यता ज्ञानत्वेनताहशान्वय बोध हेतुः तथाहि

परंपरा साधन स्थले हि तदंशे तत्प्रयोजकत्व ज्ञानस्य योग्यता ज्ञान वि-

धया तदंशे तत्कार्य प्रयोजकता बोध हेतुत्वं गुरूणामनुमतं अतएव

तन्मते यागस्य स्वर्ग साधनता बोधे अपूर्व साधनता बोधापेक्षा

कामनायाश्च न साक्षात्कृति प्रयोजकता अपि तु कार्यता ज्ञान संपादने

नैवेति कामना विशेष्ये कृति प्रयोजकत्वान्वय स्वीकारे नियोज्य-

त्वोपस्थितिर्ध्रुवा आवश्यकं चैतदालोक कृतापि एतज्ज्ञान द्वारा कृ-

ति जनकत्वामिति बोध जनकज्ञान धौव्ये नान्वयांगी कारादिति ग्र-

न्थेन। एवं कार्यत्वैक देशे कृतावपि कामना विशेष्यस्यैव प्रतीति-

न्वय उक्त युक्त्या स्वीकरणीयः स चायोग्यता संबंधेन न संभवतीति प्र-
योज्यता संबंधेनैव वाच्य इति कामि कार्यत्व मानांतर्गत कृति वृत्तिका-
मना प्रयोज्यत्व निर्वाहक नियोज्यत्व मानानुरोधे नापि कामनाविशे-
षे निरुक्त नियोज्यत्व बोधापेक्षेति नाहत्य क्रिया कार्यतेत्यादौ चिं-
तामणि ग्रंथ संगतिः। न च गुरूणां क्रियाकार्यता बोधो न शाब्दः किं-
त्वौपादानिक एवेति तत्कथं तत्र योग्यतापेक्षेति वाच्यं। शाब्द सामग्री
सहकृतानुपपत्ति ज्ञानस्यैवोपादानत्वात् तदुक्तमुपादानं तावदनुपपत्ति
सहकृत! शब्द इति कामनाया एव कार्यताज्ञानोपयोगो न साक्षादपि
तु स्वविषयक काम्य साधनतात्मक कार्यत्वानुमापक लिंगज्ञान संपाद-
नेन, तदुक्तं स च कामनानंतरं काम्य साधनताबोधात् कार्यताज्ञाने हेतु
स्यादिति एवं च कामनायां कार्यता ज्ञान प्रयोजकत्व रूप नियोज्यत्व-
माने उक्त युक्त्या क्रियानिष्ठेष्ट साधनताज्ञान प्रयोजकत्वं तच्च
गुरूणां क्रियानिष्ठेष्ट साधनत्वं विना न तत्र काम्य साधनता मान
मिति स्वर्ग साधनता ज्ञानं विना न नियोज्यान्वय बोध संभवः। अथ
योग्यता ज्ञानात्मकं नियोज्यत्व ज्ञानं मान समेवोपगंतव्यं ननु शाब्द-

न्नियोज्यत्वस्य पदानुपस्थितेरिति न तत्र योग्यताज्ञानापेक्षेति चेन्न ।
ज्ञानप्रत्यासत्तिमनभ्युपगच्छतां गुरूणां मनसो बोद्धृस्वातंत्र्येणानियो
ज्यत्वज्ञानस्य शब्दप्रयोज्यस्यैवोपगंतव्यत्वात् तच्च शाब्दत्वजाति
मदौपादानिकं वा फलतो न विशेषः पदजन्यनियोज्यत्वोपस्थिति
विरहस्याध्याहारमतेऽप्रयोजकः । अस्तु वा नियोज्यत्वमपि विध्य-
र्थः । स्वर्गकामयागयोः संसर्गो नियोज्यत्वमिति तु नामार्थधात्वर्थ
योः साक्षादन्वयस्याव्युत्पन्नत्वादनुपपन्नं । कार्यता बोधो याग
विशेष्यक एव मिश्राणां संमतः परन्तु स्वर्गकामः स्वनियोज्यक ~~कार्य~~
कार्ययागक इत्याकारक बोधस्तैरभिहितः स्वर्गकामकृतिसाध्य
यागनियोज्यः स्वर्गकाम इति तदर्थः तत्र स्वर्गकामस्य विशेष्यतया
मानं तत्राख्यातोपस्थाप्यसंख्यान्वयानुरोधेन पदार्थैर्हितं तच्च
न सम्यक् । चरमभाविन्यौपादानिककर्तृत्वबोधे कर्तरि संख्या-
न्वये नैवोपपत्तेः कार्यताबोधे संख्यान्वयांगीकारेपि औपा-
दानिकबोधे संख्यान्वय एव तत्र प्रथमासाधुत्वनिर्वाहकः कार्य
ताबोधस्याप्यौपादानिकत्वात् । अतएव कार्यत्वपक्षके समाभि-

व्याहृत क्रियान्वयित्व भावस्यैवा प्रसंगादपूर्वकार्यता बोध्यानुत्तएवे - प्रतिपत्ति संगति: कार्यत्व बोधस्य शाब्दत्व जातिमत्वे तादृश जाति मत बोधे क्रिया संसृष्टतया भासमानत्वरूप बोधीय क्रियान्वयि- त्वा भावो विप्रतिपत्ति विषयक इति चेन्न । अपूर्व कार्यतायाः क्रिया कार्यतां विना विज्ञोपितत्वात् साऽपि लिंगा अनुपपत्तिद्वारा पर्यवसा बोध्यैवेति भिन्नग्रंथा संगतेर शक्य परिहारत्वात् न चोक्तबोध रावकर्तृत्व बोधः नतु बरमं कर्तव्यावगम इति भिन्नाश्रय इति वाच्यं । अनुपदमेव नन्वेवं नियोज्यत्वे नैव स्वर्गकामा धन्वये ऽधिकारित्वोऽलाभे प्रवर्तकत्व इति योगाचेन्ना चेम भाविन्यौपादानिक बोध एव कर्तृत्वाधिकारित्व योरपि लाभादि ति तत्रैव वक्ष्यमाणत्वात् । तथा च स्वर्गकाम नियोज्यको याग स्वर्गकाम कार्य इत्याकाङ्क्षित दाचित कार्यता बोधं ऽपान याग नियोज्य स्वर्गकाम ~~कार्य~~ कार्य योग इति तदर्थः । यागविशे ष्यक स्वर्ग कार्यताज्ञान प्रयोजक स्वर्गकामनाविशिष्ट प्रयोज्य कृति साध्य याग इति निर्गवः । न च योग्यता ज्ञानत्वेन नियोज

त्वज्ञानस्य पूर्वापेक्षणीयत्वेऽपि फलीभूतज्ञाने तद्भानमनर्थक-

मिति वाच्यं तदन्वय प्रयोजकरूप विशिष्ट एव तदन्वय इति

नियमात् तदुक्तं मिश्रैरेव योग्यतावच्छेदक प्रकारेणैवोपस्थि-

त एवेतरान्वय इति येनाच्छिद्रेतरत्ववत् स्वर्गकामनियोज्यत्व-

स्य योग्यता वच्छेदकतयोपास्थिता इति तत्र च योग्यता यागादिना

योज्यते तत्र यागादि कर्मत्व बाधः इतवाध उद्देश्यनुमितौ व्यापक-

तानवच्छेदक प्रकारके मा सकल वच्छेद बोधेऽपि पदानुपस्थित

प्रकारभासकतयास्तुल्य युक्ति सिद्धत्वात् । वस्तुतस्तु अध्याहार

वादिनां तेषां योग्यता ज्ञानात्मक नियोज्यताबोध इव फलीभूततद्

मानेऽपि नेतरबाधापेक्षेति विषयाबाध एव योग्यतान्वय प्रयो-

जकरूपस्य फलीभूत बोधे मानं मार्गकृतौप्यनुमतं कार्यताविधि

पक्षे अन्वय प्रकारतया साधनत्वं शाब्दमिति तदुक्तः शाब्दं शाब्द

ज्ञान विषयः अन्वय प्रकारतया अन्वयितावच्छेदकतया । न चा-

न्वय प्रयोजकरूपस्यान्वयितावच्छेदकतया भान नियमे अन्वय

प्रयोजक रूपस्य यदन्वय प्रयोजकं रूपांतरं तस्यापि भान प्रसंगे

नानवच्छेति वाच्यं। पदार्थतावच्छेदकरूपस्यान्वय प्रयोजक ~~पदान्वय प्रयोजके~~ कस्यान्वयितावच्छेदकांतरानपेक्षणेनानव-

च्छापात्ते इदात्। अथ यदि कार्यता बोधेपीष्टसाधनत्वं भासते

तदागतं तेषां काम्यसाधनताविषयक कृतिसाध्यता ज्ञानस्य प्रव

र्तकत्वासंभव बीजमुक्तेन साध्यत्व साधनत्वयोर्विरोध निबंध

नैकधी विषयत्वासंभवे नेति चेत्साध्यत्व साधनत्वयोर्विरो-

धे नैकज्ञानविषयत्वं गुर्वनुयायिनां केषांचिदेवानुमतं न तु

सर्वेषामिति मतभेदेन सर्वसामंजस्यात् अतएव यजेतेत्या-

दाविष्टसाधन यागरूप धात्वर्थे कार्यत्वान्वय इति मतं साधन-

त्वस्यासिद्धात्मकतावादिनो नरोहितं स्यसंगमितं एवं याग-

स्य स्वर्गसाधनत्वमुपादानेनानवगम्य काम्यमान स्वर्गसाधनं

यागः स्वर्गकाम कार्य इति उपादान साचिवाच्छब्दादवैतीति

शालिकानाथ गुं थोप्युपपादितः साधनत्वं शाब्दमिति मूलं

कार्यता बोध जनक नियोज्यता बोधे अन्वयितावच्छेदकतया

साधनत्वमानाभिप्रायकं। वस्तुतस्तु अन्वयप्रकारतयाऽन्वय-

प्रयोजक रूप लक्षणे योग्यतात्वेन साधनत्वं शाब्दं शब्द सह-
कारीति मूलार्थकि करणादन्वय प्रयोजक रूपस्य फलीभूत ज्ञान
विषयत्वा नियमोऽपि उपपद्यते अतएव दीधितिकृतापि स्वचेष्टा
मन्वय प्रयोजक रूपवत्वं तेन तज्ज्ञानं प्रथमं मग्यतेनच
शाब्द बोधे तदनुप्रवेशोऽपि नियतो मानाभावादिति आमोदितं
प्रत्यक्षमणौ दीधितावित्य वधेयं एवं च यथामतं कार्यबोध
तज्जनक बुद्ध्योस्तज्जनक बुद्धावेव काम्य साधनता ज्ञानस्या
वश्यकत्वे साक्षात्स्वर्ग साधनस्य यागादेः पूर्व द्वारैव स्वर्ग
साधनत्वं गृहीतव्यं तच्च ना पूर्वापाद्यीति विनैव पूर्वे विधे
शक्ति रूपेत इति मिश्रानुसारी पंथाः । केचित्तु कामना विशिष्ट-
स्य कार्यत्वान्वायितया मानांतर्गतस्य कामना धीन कार्यत्व
मानस्य साक्षादेव निर्वाहकं काम्य साधनता ज्ञानं कृतेः कामना
धीनत्वं कृति प्रयोजक काम्य साधनत्व शरीरे कामनांतर्भा-
वादेवेति काम्य साधनत्वस्य कामना धीन कार्यत्वान्वय प्र-
योजकतया तदन्वय एव तस्य योग्यतात्वोपगमात् नियो-

ज्यत्वज्ञानमनपेक्ष्यैव काम्यसाधनताज्ञानेन कार्यताज्ञानमुत्पा-

द्यते यागस्य स्वर्गसाधनत्वमुपादानेनावगम्य काम्यमानस्वर्ग

साधनं यागः स्वर्गकामकार्य इत्यवैतीति प्राचीनग्रंथस्याप्य-

यमेव स्वरसोऽवसीयते तत्र नियोज्यत्वज्ञानापेक्षायाः कार्यताबो-

धे ~~आन्व~~ अन्वायेता ~~स~~वच्छेदकतया नियोज्यत्वमानस्य चाप्रदर्श-

नात्। कामनाविशिष्टस्य नियोज्यत्वमपि तद्विशिष्टस्य कृतिप्रयो-

जकता निर्वाहकमिति तज्ज्ञानमप्यवश्यापेक्षणीयमिति चेत् तत्

किं यावन्निर्वाहकज्ञानमेव शाब्दबोधे ~~स्व~~ पेक्षितं तथा सति चिकी-

र्षा प्रयोजकत्वादेरपि कृत्युपयोगितानिर्वाहकतया तज्ज्ञानमप्य-

पेक्षेतेति बहवोऽनर्थाः प्रसज्येरन्। अथ वोध्यधीनवोध्ये

नियोज्यत्वमानानुपगमे स्वर्गकामश्चैत्यं वंदेतेत्यादिवाक्य

मपि प्रमाणं स्यात्। मृतस्य स्वर्गकामनयापि चैत्यवंदनसंभवेन

स्वर्गकामनाधीनकृतिसाध्यत्वस्यापि तत्राबाधात्। मम तु स्वर्ग-

कामनाधीनस्य कृतिसाध्यत्वज्ञानस्य विषयीन चैत्यवंदनं

अन्यथाख्यात्यनभ्युपगमेन चैत्यवंदनादौ काम्यस्वर्गसाध-

नत्व रूप लिंगस्य विशिष्ट ज्ञानासंभवेन भ्रांतस्य पुंसस्तादृश

लिंगा संसर्गा ग्रहात् कार्यत्वा संसर्गाग्रहमात्रोपगमात् स्वर्गकामना वि-

शेष नियोज्यत्वस्यतत्र बाध इति तादृशवाक्या प्राामाण्योपपत्तिरितिचेन्न

स्वर्गकाम समभिव्याहृत विधिजन्य कार्यताबोधे स्वर्ग साधनत्वस्यान्वय

प्रयोजकस्यान्वयितावच्छेदकतया भान नियमोपगमेनैव तत्प्रामा-

ण्योपपत्तेः। साध्यत्व साधनत्वयोरेव धर्म्यैकज्ञानाविषयत्वे तु

स्वर्ग साधनता ज्ञान विषयत्वस्यैव योग्यतात्वमुपेयते तदवच्च कार्यता

बोधेऽन्वयितावच्छेदकतया भासइति अन्यथा व्युत्पत्त्यनभ्युपगमेन

तदपि बाधितं चैत्य वंदना दाविति न किंचिदनुपपन्नं। अथ कामना-

या: कृति प्रयोजकत्वं कार्यताज्ञान संपादन द्वारैवेति कृतिजनक

कार्यता ज्ञान प्रयोजकत्व रूपमेव तत्र तच्च कार्यता धी प्रयोजकत्व

रूप नियोज्यत्व घटितामिति कामना विशिष्टस्य कर्तृत्व मानांतर्गत

नियोज्यत्व मानमिति चेन्नहि अपूर्वस्य कृति साध्यत्वं यागद्वारैवेति

कृति साध्य याग साध्यत्वात्मकमेव तत्र तच्च यागस्य कार्यतया

घटितामिति यागस्य कार्यतामानमपूर्वकार्यतामानांतर्गतमिति

क्रियाकार्यत्व मार्भिधानिकमेव स्यात्तथा चापूर्वकार्यत्वानुपपत्त्या

यागकार्यता लाभ इति क्रियाकार्यत्वमौपादानिकमिति तत्सिद्धान्तो

भज्येत, यदि च पूर्वक्रियोः साध्यसाधनभावः स्वरूपसंबंध

विशेषः पदार्थान्तरमेव वेतिनासौ कृतियागयोः साध्यसाधनभाव

घटितः अपि तु तन्नितय इत्युच्यते तदाकृतिकामनयोः प्रयोज्य

प्रयोजक भावोऽपि न कामना कार्यता ज्ञानयोः प्रयोज्य प्रयोजक

भाव घटित इत्यपि तुल्यं स्वर्गकामनियोज्यान्वय योग्यता ज्ञान

विरहादित्यपि न नियोज्यत्व रूपेणान्वय बोधपरं अपि तु स्वर्ग

काम रूपो यो नियोज्यः तत्कार्यतान्वय परमेव कामनाविशिष्ट-

स्य हि इत्यादिना कार्यता ज्ञानस्य काम्यसाधनतावोधाधीनतया

विशिष्ट नियोज्यतानिर्वाहकत्वेन कथमपि काम्य साधनतायाः

बोधिता धी द्वारा कामनाधीन कार्यत्व निर्वाहकत्वमिति तदन्वये

स योग्यतेति स्वचायितुमित्याहुः। तदयं निष्कर्षः। यागादिरूप

कालान्तर भावि फल साधनीभूत क्रियायां व्यापार घटितस्य तादृश

फल साधनत्वस्य ज्ञानं न व्यापारोपाध्यैतिं विना अपूर्व रूपव्यापारस्य

चोपस्थापकांतरा भावादविधेरेव दृष्टस्थापकत्व मंगीकार्ये तच्च

शक्तिं विना न निर्वहतीति वैदिकलिङः कार्यत्वेन तत्र शक्तिः कल्प्येति

यदि च साधनत्वं स्वरूप संबंधविशेषः पदार्थांतरं वा तच्च परं

परा साधनस्यापि न व्यापार घटितं एवं च व्यापारानुपस्थितो

वापि साधनतात्वेन सामान्य धर्मेण परंपरा साधनत्वमापि सुग्रहं

परंपरा साधनत्वेन च ज्ञानमनपेक्षितं इत्युच्यते तदपि सा=

साधनत्वेन गृहीते साधनत्वान्वय बुद्धौ फल समय पर्यंतस्थायि

व्यापारजनकत्व रूपान्वय प्रयोजक धर्म ज्ञानमपेक्षितं योग्यता

धी यः शाब्द धी जनकत्वादिति यागादौ स्वर्ग साधनत्वा न्वय

बोधे हेतु भूतस्य स्वर्गपर्यंत स्थायि व्यापारजनकत्व ज्ञानस्यानिर्वा-

हाय तादृश व्यापारे विधेः शक्ति कल्पन मावश्यकं तथा च विधि

प्रत्ययात् कार्यत्वावच्छिन्नोपस्थितौ तत्र यागस्य जन्यता संबंधेन

तदेक देशे कृतौ च कामना विशिष्टस्य प्रयोज्यता संबंधेनान्वयो

पगमात् स्वर्ग कामो यजेतेत्यादितः यागविषयकं स्वर्गकाम

कार्यमित्याकारकः प्राथमिकोन्वयबोधः विषयपदस्य जनका-

कतया यागविषयकामित्यस्य यागजन्यामित्यर्थः तत्र च का-
मनाविशिष्टस्य कर्तॄप्रयोज्यत्वेनान्वयेकार्यता ज्ञानवत्वरूपस्य
नियोज्यत्वस्यान्वय प्रयोजकतया जलेन घटमाहरेत्यादौच्छ
छिद्रेतरत्वावच्छिन्नोपगमे क्रियायांकामे कार्यता बोधे भावेन:
क्रियानियोज्यत्व वदुक्तबोधेपि कामिनो पूर्व नियोज्यतया मान
मावश्यकम् तथा च काम्यसाधनताज्ञान जन्यकार्यता धी मत्
पुरुष कार्य यागविषयकामित्याकारक एवापूर्वकार्यताबोधः इत्थं
च याग पुरुष कामनोनां स्वर्गार्थतया प्रतीतिः स्वर्गार्थता च याग-
स्योपायत्वेन स्वर्गहेतुभूतापूर्वनियोज्यतया पुरुषस्य स्वर्गहेतुभूत
पुरुष प्रवृत्तिजनक कार्यता ज्ञान जनक काम्य साधनता ज्ञान निर्वा
हकतया च कामनायां इति तात्सिद्धान्तोपि संगच्छते एवमपूर्वे
स्वर्गपर्यंत स्थायित्वमपि प्राथमिक बोधे भासते तदर्थैव फलसमय
पर्यंत स्थायि व्यापारजनकत्व रूप योग्यता ज्ञान निर्वाहात् तच्च
छिद्रेतरत्वादि वत्पदानुपास्थितमपि भासते अस्तु तदापि विध्यर्थो
एवमपूर्व कार्यतायां प्रतीतायां अपूर्व कार्यत्वं यागस्य कार्यतां

विना नोपपद्यते यागद्वारैवापूर्वस्य कृतिसाध्यत्वादित्यनुपप-
त्तिज्ञानसहितसामग्रीतः स्वर्गसाधनयागः स्वर्गकामकार्य इति
द्वितीयो बोधः तत्र काम्यसाधनत्वरूपयोग्यतापदानुपस्थिता-
प्यन्वयितावच्छेदकतया भासते ततश्च यागस्य स्वर्गकामकृति
साध्यत्वं स्वर्गकामस्य यागकर्तृत्वं विनानुपपन्नमित्यनुपप-
त्तिधीघटितशब्दात् स्वर्गकामो यागकर्तेति तृतीयो बोधः।
यद्यपि क्रियाकार्यताबोधात्पूर्वमौपादानिकः क्रियायाः काम्य
साधनताबोधोऽप्यवश्यमङ्गीकरणीयः तं विना योग्यताज्ञानवि-
रहेण क्रियाकार्यत्वबोधासंभवात् तदुक्तं एव मपूर्वकार्यताबो-
धे बोद्धा विमृशति अपूर्वं जनिकाताव त्कामिकृतिः साध्यं यागं
विषया भवति तद्द्वारापूर्वं जनयितुं शक्नोति नत्वन्यथान्यथा तस्त-
दनुत्पत्तेः कामिकृतिश्च यागविषया तदा भवति यदि यागः काम्य
मानसाधनं स्यात् काम्यसाधनतया ज्ञान एव कामिनः कार्यताधी
नियमात् एवं यागस्य स्वर्गसाधनत्वमुपादाने नावगम्य काम्यमान
स्वर्गसाधनयागः स्वर्गकामकार्य इत्युपादानसचिवा बुद्ध्यावैतीति। एवं

मिश्रमते कामिनः क्रियानियोज्यताबोधोऽप्यवश्यमन्तरा स्वीकरणीयः
तेन नियोज्यत्वस्य कार्यत्वे बोधौपयिकयोग्यतात्वं स्वीकरोतीति
बोधसंचकमेव न तु लभ्यं तथापि योग्यताज्ञानविषया अर्थापत्तितस्य
तादृशबोधद्वयस्य शब्दजन्यत्वमानियतं प्रमाणान्तराधीनबोधेना-
पि निर्वाहादिति बोधत्रयस्यैव तन्मते शब्दजन्यत्वनियमाद्बोधत्रय-
प्रवादः। केचित्तु स्वर्गकामकार्यत्वेनापूर्वबोधनन्तरं ममेदं याग-
विषयककार्यमिति द्वितीयो बोधः। काम्यसाधनत्वेन स्वर्गकाम-
कार्यत्वेन च क्रियाबोधस्तृतीयः स्वर्गकामो यागकर्तेति चतुर्थः
स्वर्गकामकार्यमिदमहं च स्वर्गकामः अतो ममेदं कार्यमिति यागे
पषुः प्रतिसंधानम् पंचममिति पंचैव ज्ञानानि शाब्दानीत्याहुः।
परे तु यागविषयकं स्वर्गसाधनत्वेन ज्ञायमानस्यापि कार्यं नियो-
ज्य स्वर्गकामीयमिति प्राथमिकोऽन्वयबोधः। नियोज्यत्वं योग्यता-
त्वेन स्वर्गकामे प्रकारतया भासते विशेषणान्वयनिर्वाहकत्वेन स्वर्गकामस्य
संसर्गतयापि भासते ततोऽतीन्द्रियत्वेन फलत्वेन च साक्षात्कृत्यसाध्य-
स्या पूर्वस्यावगतं कार्यत्वं यागस्य स्वर्गकामिकार्यत्वं विना उपपन्न-

मित्यनुपपत्तिज्ञानसहकृत प्रतीतापूर्वद्वारक काम्यसाधनत्वज्ञान ता

नियोज्य स्वर्गकामीयः स्वर्गसाधनत्वेन ज्ञायमानो यागः कार्यइति द्विती-

यो बोधः ततायत्कृति साध्यत्वेन यागो ज्ञानः साकृतिराङ्ख्य व्याति-

रेकेणानुपपन्नो मित्यनुपपत्ति ज्ञाने स्वर्गकामः स्वनियोज्यकस्वर्ग

साधनत्वेन ज्ञायमान कार्य यागानुकूल कृतिमान स्वर्गकामः स्वनि-

योज्यक स्वर्गसाधनत्वेन ज्ञायमानकार्य यागानुकूल व्यापारवानिति

वा तृतीयो बोधः। क्रियानुकूलो व्यापारवत्व मेव कर्तृत्वं अत एव

यागं स्वर्गकाम कृति साध्यत्वे ऽवगते तत्कर्तृत्वमपि लब्धमिति

तृतीय बोधो व्यर्थ इत्यपि परास्तं। सामान्यतः शब्द्या आख्यातो

पस्थापितस्य व्यापारस्य कर्तृ साकांक्षतया प्रथमांतपदोपस्थाप्या

न्वयित्व नियमेन च तृतीय बोधस्यावश्यकत्वात्। ततो नानाधि

कृतः कर्तेतिन्यायेन स्वर्गकामस्यावगतं कर्तृत्वं यागजन्यफल

भो कृत्वात्मकाधिकारित्वं विनानुपपन्नमित्यनुपपत्ति ज्ञाने

स्वर्गकामो यागजन्य फल स्वामीति चतुर्थो बोधः। ततश्चैतत

वाक्यस्य प्रति पत्त्वे अवगते द्वारीक्षत ज्ञान जननं विना तदनुपपन्न

~~ज्ञानसहितेन~~ मित्यनुपपत्तिज्ञानसहितेन तेन स्वर्गकामस्य याग :कर्त

स्वर्गकामो यागस्य कर्ता भोक्ता चाहमपि स्वर्गकाम इति प्रति सं-

धानेन यागो मत्कृति साध्य: अहं च यागकर्ता तदधिकारी चेति

प्रवर्तकं पंचमज्ञानमुत्पद्यत इति प्राभाकर संप्रदाय इति प्राहु: ननु

आशु विनाशिन: कालांतर भाविफल साधनतान्वये यदि फल समय

स्थायि व्यापारवत्त्वं योग्यता तदाग्नेयादिषु षड्यागेषु परमापूर्व

साधनतान्वय बोधानुरोधेन षण्णां कालिकापूर्वाणामपि वाच्यत्व

मंगीकरणीयम् तथापि तस्यैव योग्यतात्वात् तथा चाग्नेयोष्टा

कपालोभवत्य मावास्यायां ऐंद्रं दधिभवत्यमावास्यायां अ

ग्नेयोष्टाकपालो भवति पौर्णमास्यां ताभ्यामग्नि षोमीयमेका

दश कपालं पौर्णमासे प्रायच्छत उपांशुयाज मंतरायजती

षड् द्रव्य देवता संबंध रूप यागस्य प्रथम प्रतीति रूपोत्पत्ति बोधक

तयोत्पत्ति वाक्यानि दर्श पौर्णमासाभ्यां यजेत स्वर्गकाम इति

प्रधान विधयर्पी भूतं परमापूर्व विधि प्रति रूपकीभूते तानंतरं

विना निर्जतेन भवतीत्यादिना नश्यत हेतुत्वं षड्यागात्मक दर्श

पौर्णमास स्वरूपे प्रतिपादयंति तदनंतरं च तत्प्रतीति साधनत्वा-
नुपपत्त्यादि षडुत्पत्ति प्रवीर्णिकालिका पूर्वव्यपदेश्यानिकल्प्यं-
त इति प्राभाकराद्धिसिद्धान्त भंग प्रसंगः यागोविना व्यापारोपा स्थि-
तिं स्वर्ग हेतुत्वस्यैव परमापूर्व हेतुत्वस्यापि ग्रहीतुमशक्य-
त्वात् तस्मादुभयथापि अपूर्वकल्प्यता वाच्यता वास्तु न तु
वैषम्येणार्द्धजरतीयं एव भंगापूर्वेऽपि। यत्वादौ प्रधान विधि
प्रवृत्त्या तदुपस्थापित परमापूर्वमनूद्य तत्साधनत्व माग्नेया-
दीनां बोध्यते तदानीं सामान्यतो यागः फलपर्यंतस्यापि
व्यापारत्वानिति योग्यता निश्चयोऽस्त्येव प्रधान विधिनैव वा
पूर्वस्योपस्थित त्वात् स एव च परमा पूर्व साधनतान्वय बोध
जनक इति तदसत् तादृशानिश्चयस्या ग्रेयत्वादि रूपान्वायतव-
च्छेदका प्रकारकत्वेन परमापूर्व समयपर्यंत स्थापि व्यापार विष-
यकत्वेन यो क्तान्वय बोध जनकत्वा संभवात् न च परमापूर्वस्यो
पस्थितौ तज्जातीय द्वारसंभावनयान्वय बोध संभव इति वाच्यं।
शाब्दबोधेन्वय प्रयोजक रूपवत्व रूपयोग्यता निश्चयस्यैव-

जनकत्वात् । अन्यथा रोगनाशकौषध ~~भक्ष~~ भक्षणादौ फलपर्यन्त व्या-

पिव्यापारस्य चातुर्मास्यादि दर्शनेन तत्संभावनया स्वर्गसाधन-

त्व धी संभवेन पूर्वमागस्यैव वाच्यता न स्यात् । यद्यपि बहुभिः

पुरुषैः एकदानुष्ठितानामाग्नेयादीनां षण्णां यौगपद्य संभवेन साक्षा-

त्साधनत्वबाधनवता तेन प्रथमं तेषां परमापूर्व साधनत्व धीसं-

भवे वैतेन कालिकापूर्वापाख्यित्वपेक्षापत्त्वं नंतरमेक कर्तृकता-

वच्छेदेन साक्षात्साधनत्वबाध प्रतिसंधाने साधनत्वसामान्य

क्षोत्थमुत्पत्त्य पूर्वकल्पनेति तेषां कल्प्यत्वमित्युपाध्यायैरुक्तं

तदप्य समंजसं प्रथममेक कर्तृकत्वस्य प्राणीपीहितत्वाभावेन

योग्यता निर्णया संभवात् अमावास्यापौर्णमासी विहितयोः

यौगपद्य संभावनाया असंभावितत्वाच्च उपक्रमेणाग्नेया-

दीनामेकैकस्य परमापूर्व साधनत्वमवगम्यते तच्च नानुपपत्ते ।

साक्षात्साधनत्वबोधात् अनंतरं च य एवं विद्वानमावास्यायां

यजते एवं विद्वान् पौर्णमासीं यजते इति विद्वद्वाक्याभ्यां

दर्शपौर्णमासयोः । क्रियाकलाप स्वरूपता वगमे साक्षात्त्वबाधेऽपि पर-

बाधितस्य परमापूर्वसाधनत्वस्य रक्षणार्थं कालिकापूर्वकल्पनमि-

ति चेन्न, एवं सति कालिकापूर्वाणामविज्ञमात्रकल्प्यतायाऽउप-

पादनेऽपि विज्ञकल्प्यताया अनुपपादनात्। अथोत्पत्ति वाक्यानि

बहूनामङ्गानां परमापूर्वसाधनतां बोधयेयुस्तदुक्तरीत्या कालिकापूर्वाणां

वाच्यत्वं स्यात्तदेव न किंतु तेषां दर्शपौर्णमास स्वरूपमात्रबोधकत्व

मुचितमिति नोक्तरीत्या तेषां वाच्यत्वमिति चेन्न तथापि दर्शपौर्णमा-

साभ्यां यजेतेति प्रधानविधौ दर्शपौर्णमासे परमापूर्वसाधनता

बोधकतया दर्शपौर्णमासाभ्यामिति द्विवचनेन प्रथमपठितै-

रुत्पत्तिवाक्यैश्च कारणकलाप स्वरूपतयावगते योगे परमापूर्वसाधन-

ता बाधा स्यादिति स्फुटतया च तदनुरोधेनैव कालिकापूर्वाणां वाच्यता-

भ्युपगमस्यावश्यकत्वादिति चेदत्र केचित् कालिकापूर्वाणामपि तन्मते

वाच्यत्वमेव न कल्प्यत्वं कल्प्यता प्रवादस्तु परमापूर्वसाधनत्वप्रत्यया

न्यथानुपपत्या तद्बोधप्रापम्योपगमात् न निबंधन इति वदंति अप

रेत्वाहुः, यद्रूपावच्छेदेन कालांतरभावित्व प्रतिसंधानं तेनैव रूपेण

मासमानं फलं प्रति फलसाधनतान्वये फलपर्यंत स्थायि व्यापारवत्वं

योग्यता तादृशांच रूपं स्वर्गत्वादिकमेव न तु कार्यत्वं कार्यस्यायग्य-
वहित क्षणेऽपि संभवात् एवं च कार्य साधनतात्वेन धर्मो पूर्वसाध-
नतान्वयेऽध्यारोपासंयोगेऽपेक्षा विरहेण कालिका पूर्वाणं बाध्यता
पदं तु अग्रे स्वर्गपर्यंत स्थापि कार्यंतरा जनकानामाग्नेयादीनां ता-
दृश कार्यजनकत्वं धर्मो पूर्वमादायैव पर्यवस्यति तच्च सर्वापीयं
कालांतर भावीति व्यापारं विना तज्जनकत्वानुपपत्त्या कालिका पूर्वा-
णि कल्प्यंत इति तेषां कल्प्यत्वमिति एव मंगा पूर्वं प्युक्तरीत्याक-
ल्प्यतो येति दिक् । नन्वेवं यागे स्वर्गसाधनतानिर्वाहाया पूर्वं वाच्य-
मिति यदंगीक्रियते तदायो ब्राह्मणायाव ~~अव~~गुरे शतेन यातया
दित्यस्यार्थो ब्राह्मण वधोद्यशतवर्षावच्छिन्नतया तन्नेत्यर्थः प्रागभाव
वान सशत यातना रूप नरक विशेषवानित्यर्थका ब्राह्मणावगोरण-
स्य शतयातना हेतुत्वं ग्रहार्थं दुरीता ~~पूर्वं कल्प्यत इति प्राभाकर~~
पूर्वस्यापि वाच्यत्वमावश्यकं विशेषाभावात् तथा च तत्र शतयात-
ना हेतुत्वमवगम्य तन्निर्वाहकस्य दुरीता पूर्वं कल्प्यत इति प्राभाकर
इति सिद्धान्त विरोधो दुर्वार इति चेदमाहुः न यवगुरे यातयादि

त्वेनेनावगौरण यातने विधीयेते तयो: कार्योपदेशानौचित्यात्

एवं च स्वर्गकामो यजेतेत्यत्र विधिलिङा स्वर्गकामकार्यत्वं याग

प्रतिपाद्यते तत्र च स्वर्गसाधनत्वं योग्यतातद् ग्रहश्च न द्वारो

पाद्ययिति विनेति युक्तं तदपूर्वस्य वाच्यत्वं प्रकृते तु हेतु हेतुमतो

लिङित्यनुशासनवलं नावगौरणशत यातनयोर्नियतपौर्वापर्य

मात्रं प्रतिपाद्यते तत्र च न द्वारोपाध्येति योद्धितेति द्वा बिनैव

पौर्वापर्यनिश्चयसंभव इति न दुरितापूर्वस्यवाच्यत्वं। नचैवं

दुरितापूर्वं कल्प्यामिति न स्यादिति वाच्यं। कारणांतरं कल्पनाया

जौवेवान्यथा सिद्धिपंचकरहितस्यैवावगौरणस्य नियतपूर्ववर्ति

योपाध्यितस्य कारणत्वकल्प्यते अन्यथा नियमवीजभूताकांक्षाया

अप्यशांतेश्चेति दुरितापूर्वकल्पनाया आवश्यकत्वादिति प्राभा

कमत निरवद्यति अत्र न्यायविद: अन्वयप्रयोजकरूपवत्वं यदि

योग्यतास्यात्तदैवोक्तरीत्या पूर्वस्य ~~वाच्यत्वं~~ वाच्यत्वं संभाव्येत तदे

व न अन्वयप्रयोजकरूपवत्वस्य योग्यतात्वे स्थूलजलाभिप्राय

कस्य पयसा सिंचतीति वाक्यस्यापि योग्यतापत्ते: संकान्वय

प्रयोजकरूपस्य द्रव्य द्रव्यत्वस्य स्थूलजलेऽपि सत्वात् । नचा-
नान्वित वृत्तित्वेनानुपाश्रित धर्मवत्वमेवान्वय प्रयोजकरूप-
वत्वमिति नोक्तातिप्रसंग इति वाच्यं । तथासत्यन्वय निश्चय
विरहस्यैव योग्यतात्वमुपेत्य तद्रूप सत्त्वस्यान्वयबोध हेतु-
त्वौचित्यात् तस्य च यागेपि स्वर्ग साधनत्व बाध धीविरहे-
ण सत्वात् । वस्तुतस्तु एक पदार्थे तात्पर्य विषयीभूता परपदार्थ
संसर्गवत्वमेव योग्यता लाघवात् तस्याश्च संशयनिश्चय
साधारणं ज्ञान मात्रमेव हेतुः तच्च यागेपि स्वर्गसाधनत्वा संशय-
स्य तत्र सत्वात् अपूर्व वाच्यत्व वादिनापि तथैव वाच्यत्वात् नह्य-
पूर्वे स्वर्ग साधनत्वस्य तद् योग्यता रूपस्य फलपर्यंत स्थायि
व्यापारवत्वस्य वा पूर्वं निश्चयः संभवति एवं चापूर्ववाच्यत्वं
विनैव यागे स्वर्गसाधनत्वादि शाब्दबोध संभवेऽपूर्व वाच्यत्व
मानाभावः । ननु सामान्यज्ञान जनक सामग्र्याएक विशेषबोधे
तादृश विशेषप्रकारकज्ञान जनकत्वं क्लृप्तं अतएव घटेनज-
ल माहरेत्यादौ सच्छिद्र घटबोधे छिद्रेतर घटस्य सच्छिद्रे-

तत्वेन भानं एवं च यागे साक्षात्साधनत्व बोधे परंपरा साध-

नत्वत्वेन भानमुपेयम् तच्च परंपरा घटकाऽपूर्वोपस्थितिं

विना न संभवतीति तद्वाच्यत्वमावश्यकमिति चेन्न साक्षात्पं

परोदासीन साधनत्वत्वेनैव परंपरा साधनत्व भानोपगमात् घ

टेन जलमाहरेत्यादावपि घटत्वादिनैव साच्छिद्रेतर घटादि

भानं न तु साच्छिद्रेतर घटत्वादिना पदादुपस्थितस्यैव शाब्दबोध

विषयत्वेन साच्छिद्रेतरत्वस्य पदानुपस्थिततया शाब्दबोधविष-

यत्वासंभवात् न च घटपदस्य साच्छिद्रेतर घटत्वावच्छिन्नलक्ष

णया साच्छिद्रेतरत्वमपि पदोपस्थितिमेवेति वाच्यं अन्वयानु-

पपत्ति ज्ञानादि विरहेण निर्वीज लक्षणायां मानाभावात् लक्षणा

प्रतिसंधानाभावेऽपि शाब्दबोधस्यानुभवसिद्धत्वाच्च अपि

घटादि पदस्य घटादौ व्यवहारादिना शक्तिग्रहे साच्छिद्रेतरत्वादे

भानात् शक्तिग्रहजन्य संस्कारोपस्थितस्य तस्य शाब्दबोध

भानमस्तु आकाश शब्दा शक्यस्यापि शब्दाश्रयत्वस्य शब्दाश्र-

यत्व विषयकाकाश शब्द शक्ति ग्रह जन्य संस्कारोपस्थित शब्दा

ऽपत्वस्याकाश शब्द जन्य शाब्दबोधे मान दर्शनादिति चेन्न।

तत्वापदजन्योपस्थिति विषयस्यैव शाब्दबोधविषयत्वेन

साधितत्वादौ तत्वा घटपदजन्योपस्थिति संभवेत्वन्मत

सिद्ध मपूर्व वाच्यत्व मपि दुर्घटं स्यात् विशिष्टापूर्वानु-

भवा भावेन तथा स्मरणेपि शाब्दबोधं प्रति समान प्रकारक-

त्वेनैव पदार्थोपस्थिति हेतुतया सामान्यत: स्मरणे नगवादि

पदइवात्रापि विशिष्टस्य शाब्द बोध विषयत्व संभवात् । आकाश

पदस्य तु शब्दाऽपत्व विशिष्ट एवशक्ते रुपगमात् न चाष्टद्र-

व्यातिरिक्त द्रव्यत्वेनाप्याकाशस्याकाश पदादुपस्थित्यानि-

यतोपस्थिति कत्वा भावान् शब्दाऽपत्व विशिष्टे शक्ति संभव

इति वाच्यं । कदाचिद् गुरु धर्म विशिष्टस्य शक्तिभ्रमाद्बोध-

संभवेपि लघु धर्म विशिष्ट एव शक्ति कल्प नाया उचितत्वात् ।

अन्यथा कदाचिद् गवयादि सादृश्य विशिष्टस्य शक्ति भ्रमाद् गवा-

दि पदेन बोधने गोत्वादि विशिष्टे शक्ति विलोपापत्ति: । शब्दऽप

आकाश इत्यादि सह प्रयोगस्तु आकाश पदस्याकाश पद वाच्यादि

पत्तवोपपादनीयः। केचित्तु आकाश पदादाकाशस्य निर्विकल्पक

स्मरणं शाब्दबोधस्तु समभिव्याहृत इतर पदार्थ प्रकारक एवेति

न तस्य निर्विकल्पकत्वापत्तिरित्याहुः अन्ये तु आकाशांशे निर्ध

र्मितावच्छेदकतया आकाशो द्रव्यमित्यादि वाक्य जन्य शाब्दबोध

स्य संशय निवर्तकत्वं न स्यात् स्याच्च तदंशे निर्विकल्पकात्मको

पास्त्विति स्वीकारे तत्प्रयुक्तातिरिक्त कार्यकारणभावादि कल्पना

गौरवमिति नैतन्मतं सम्यगित्याहुः। अथ साक्षात्स्वर्गसाधनत्व-

बाध सहकृतया: स्वर्ग साधनत्वत्वेन स्वर्गसाधनत्व बोध साम-

न्य सामग्र्यास्तदितर परंपर स्वर्गसाधनत्वत्वेन परंपरा स्वर्गसाधनत्व

प्रकारक बोध जनकत्वमनुभवसिद्धं इदमेवं यौक्तिकं च अन्यथा

पर्वतीय वह्नितर वह्नि बाध सहकृत वह्न्याद्यनुमिति सामग्र्या अपि पर्व-

तीय वह्नित्वेन पर्वतीय वह्नि प्रकारकानुमितिजनने तदनंतरं पर्वतः

पर्वतीय वह्निमान्न वेति संशयापत्तेः इत्थं बाधस्थलेऽनुमितौ व्याप-

कतानवच्छेदकस्यैव शाब्द पदानुपाश्चित स्यापि भानात् तथा चास्य

बाध्यत्वं दुर्वारमिति चेन्न, साक्षात्साधनत्व बाधे साक्षादन्यसाधन

तात्वेन परंपरा साधनत्व बोधोपगमेनादोषात् तस्मादपूर्वस्या-
वाच्यतया कल्प्यत्वेन लिङोऽपूर्वबोधकता नास्तीत्यलंविस्त-
रेण. अत्र मद्दाः यागव्यापारतया स्वर्गपर्यंतस्थायिनोऽपूर्वस्य
कल्पनमपेक्ष्य यागादेरेव स्वर्गपर्यंतस्थायित्वकल्पनमुचितं
धर्ममात्रकल्पने लाघवात् । तावतैव स्वर्गसाधनत्वोपपत्तेश्च ।
अथ विभुसमवेत योग्यविशेषगुणनाशत्वावच्छिन्नं प्रति स्वा-
नंतरोत्पन्न स्वसमानाधिकरण विशेषगुणत्वेन हेतुतया ज्ञानादि-
स्थले क्लृप्ततयेच्छादिरूप यागस्य तृतीयक्षणे नाशावश्यंभावेन
स्वर्गपर्यंतस्थायित्वं न संभवतीति चेन्न स्वत्वाननुगमेन कारणता-
वच्छेदकस्य तत्तद्व्यक्ति विश्रांततया कार्यतावच्छेदकस्यापि तत्तद्व्य-
क्ति विश्रांतत्वावश्यकतया यागादिनाशे स्वजन्य चरम स्वर्ग-
व्यक्तेरेव तद्व्यक्तित्वेन हेतुतया उपगमेन यागस्य स्वर्गपर्यंतं
स्थायित्वसंभवात् न च यागस्य स्वर्गपर्यंतमवस्थाने चतुर्थादि-
क्षणेऽपि यजेऽहमित्याकारक याग प्रत्यक्षापत्तिरिति वाच्यम् ।
विषयता संबंधेनात्म विशेषगुणप्रत्यक्षे स्वाधिकरणक्षणो-

त्पत्तिकत्वसंबंधेन कृते हेतुत्वोपगमेनोक्तापत्त्यसंभवात्
न चैतादृश हेतुताकल्पने गौरवमिति वाच्यं । अनंतातीत
पूर्वकल्पनापेक्षया एतादृशहेतुतायामेव लाघवादिति वदं
ति अत्र नैयायिक धुरन्धरा नव्याः योग विशेष गुणसाक्षात्
प्रतियोगिता संबंधेन नाशत्वावच्छिन्नं प्रति स्वध्वंसत्व स्वसा-
मानाधिकरण्योभय संबंधेन विशेष गुणत्वेन सामान्यत
एव कारणता कल्पने बाधकाभावेन ज्ञान सुखादेरिव यागस्यापि
ततीय क्षणे नाशस्य दुर्वारतया स्वर्ग पर्यंतमवस्थानासंभवेन
तावत्पर्यंतस्थायि पूर्वात्मकव्यापारकल्पनमावश्यकं किंचा
पूर्व स्वीकारे लाघवात्तदुपगम आवश्यकः । तथाहि अपूर्वानंगी
कारे प्रधान फल हेतुत्व मंगानामपि वाच्यं, तथा च यस्य दश
विध फलहेतो योग विशेषस्यांगानि शतं तस्य फलं प्रति हेतुत्वानि
दश अंगानां च दश शतं हेतुत्वानि : अपूर्वोपगमे तु प्रधानस्यैकं
परमापूर्वं हेतुत्वं फलेषु दश हेतुत्वानि परमापूर्वस्यापि फलेषु दश
हेतुत्वान्येव, परमापूर्वं प्रति चांगानां शतं हेतुत्वानि शतं हेतुत्वा

चांगापूर्वाणां । अंगापूर्वेषु चांगानां शतहेतुत्वानीति लाघवं

स्फुटमेव, एतेन यागादि ध्वंस एव यागादीनां स्वर्गजनने व्यापारोऽस्तु

किमपूर्वेण, न च प्रतियोगिकार्ये ध्वंसस्य ध्वंसकार्ये च प्रतियो-

गिनोऽन्यथासिद्धतया न हेतुत्वं संभवतीति वाच्यम् । तथान्यथासिद्ध-

त्वे मानाभावात् । न चैवं यागादेः स्वर्गादिप्रतिबंधकतापत्तिः कारणी

भूताभाव प्रतियोगित्वस्यैव प्रतिबंधकतारूपत्वादिति वाच्यं, घटादि

नाशजनक नाश प्रतियोगिनः कपालादेर्घटादि नाश प्रतिबंधक

तावारणाय संसर्गाभावत्वावच्छिन्नात्यंताभावत्वावच्छिन्ना वा या

कारणता तदाश्रयाभाव प्रतियोगित्वस्यैव प्रतिबंधकतारूपत्वेना-

दोषात् । यत्तु गंगास्नानस्य सर्वांगीण जलसंयोगरूपस्यापूर्वद्वा-

रैव फलहेतुता युज्यते विनिगमनाविरहेण जलावयवावच्छिन्नात्तद-

वयवैश्च संयोगादीनां नानात्वेन एकस्य ध्वंसस्य व्यापारत्वा

योगात् । बहूनां च तथात्वे गौरवप्रसंगादिति तदसत् । बहूनामपि

ध्वंसानां ध्वंसत्वेनैक हेतुतायां गौरवानवकाशेनोक्तयुक्तेरप्रयोज

कत्वात् । न च धर्मः क्षरति कीर्तनादित्यादि स्मृतिरेवापूर्वे प्रमा-

णांतस्या विहितक्रिया व्यापार विशेषोधर्मः क्षरतिनश्यतीत्यर्थक

तयातद्धर्मस्य पूर्वमंतरेणानिर्वाहात् ध्वंसस्य ध्वंसासंभवादि-

तिवाच्यं । विहित क्रियाकर्तृत्व मात्रेण धार्मिकपद प्रयोगेण तस्याः

स्मृतेः धर्मोविहित क्रियाक्षरति स्वकार्यजननात् चलति फलं नोत्पादयत

त्यर्थकतया तदर्थस्यच फलकीर्त्तनस्य प्रतिबंधरूपैव निर्वाहेणापूर्वा-

सिद्धेः न च प्रधान फलाजनकत्वे एतत् तज्जनकापूर्व जनकस्यांगत्वात्

तद्व्यवहार एवापूर्वे प्रमाणमिति वाच्यम् । प्रधान कथंता प्रवृत्तावि

विषयस्यैवांगत्वात् । न च याग ध्वंसस्य व्यापारत्वे स्वर्गविच्छेदोनुप

पन्नः अपूर्वस्य व्यापारत्वेच तस्यच मे स्वर्गव्यक्तिनाश्यतयातदुपपत्ति

रितिवाच्यं, कृतयागादेरिह लोकेपि फलवारणाय सहकारितया

वर्षोपर्यस्य वृत्तित्वात्मक कालविशेषस्यैव फलोत्पादकतया

तदुपपत्तेः, एवं निषिद्धकर्मणामपि स्वध्वंसद्वारा नरकजनकतोपप-

त्या दुरितापूर्वेपि मानाभावः न च तस्मादेनसः पूतोभवतीति श्रु-

त्यातात्सिद्धिः तच्छ्रुत्या कृतप्रायश्चित्तस्य दुरितापूर्वनाशप्रतिपाद-

नादितिवाच्यं एतः पदस्य तादृश कर्मपरतया तच्छ्रुतः कृतप्रायश्चि-

त्वस्य निषिद्धकर्मजन्यफलभागित्वाभावमात्रप्रतिपादकत्वादि-
त्यपि परास्तम्। यागादिध्वंसस्य व्यापारतयाऽङ्गानामपि प्रधान
फलं प्रत्येव हेतुत्वस्योपगंतव्यतयोक्तदिशा गौरव प्रसंगादिति
दिक्। केचित्तु कीर्तनादिना ध्रुवतर्थवापूर्व सिद्धिः। अन्यथा कीर्त-
नादेः फलाभाव प्रयोजकत्वानुपपत्तेः ध्वंसस्य तदनाश्यत्वात्। विरा-
तीतेन कीर्तनादिना कालांतरभावि स्वर्गादि फल प्रति बंधस्याप्ययोगा-
त्। न च कीर्तनादि ध्वंसस्य फल प्रतिबंधकत्वोपगमात् तदुपपत्ति-
रिति वाच्यम्। तथा सति कीर्तितकाश्वमेधस्य पुरुषस्य कीर्त्तनानंत-
रमाचरितेनाप्यश्वमेधेन फलानुत्पत्ति प्रसंगात्। न च तत्तत्कर्मव्यक्ति
जन्यफलं प्रति तत्तत्कर्मकीर्त्तनध्वंसस्य विरोधित्वोन्नाक्त प्रसंग इति
वाच्यं, तादृश फलस्य प्रायशोऽप्रसिद्धत्वात्। गौरवात्। अकीर्तित
कार्यस्थलीय सामान्य सामग्री बलेन कीर्तित कर्मणः फलजनकताप-
त्तेर्दुर्वारत्वाच्च। एतेन तत्तत्कर्मजन्यं तत्तत्कर्तृगतं यत्फलं तदन्य-
फलं प्रति तत्तत्कर्मकीर्तिन ध्वंसो वीरोधीतथाविधस्य फलस्य पुरु-
षांतरे प्रसिद्धत्वादित्यपि निरस्तं। यत्तु अश्वमेधादेः फलजनकतायां

कीर्तितान्यत्वस्यावच्छेदकतया निवेशान्नोक्तदोषइतितदसत् ।
तथा सति समानकर्तृकत्व पूर्वकालीनत्वोभय संबंधेन कर्मना-
शाजलस्पर्शविशिष्टान्यत्वादीनामपि तत्र निवेशनीयतया विशे-
ष्य विशेषणभावे विनिगमनाविरह प्रयुक्त गौरवापत्त्या तदपेक्षया
स्वविषयजन्यत्वादि संबंधेन कीर्तनादेरपूर्वनाशकत्वस्यैव युक्त-
त्वात् न च कर्मनाशाजलस्पर्शादि प्रयुक्तापूर्वनाशे व्यभिचारइति
वाच्यम् , उक्तोभय संबंधेन कीर्तनादि विशिष्टं यद्यदपूर्वं तद्वृत्ति
प्रतियोगितायाः कार्यतावच्छेदक संबंधत्वाभ्युपगमेनोक्त व्यभिचाराभा-
वात् । यदपि उपधायकता संबंधेन फलं प्रति कीर्तितान्यत्वं हेतुर-
तोनातिप्रसंगः न वा गौरवमिति तदप्यसत् । अतीत यागादावुपधायक-
ता संबंधेन फलोत्पत्तेरसंभवात् । कीर्तिते यागादावुपधायकतासंबं-
धेन फलोत्पादस्योक्त हेतुतया वारणेऽपि समवायेनात्मनि फलोत्पादा-
पत्तेर्दुर्वारत्वाच्च । न चोपधायकता संबंधेन फलोत्पादकसामग्र्याः
प्राक्क्षणसत्वमपि समवायेन फलोत्पादेऽपेक्षित मते नोक्त दोष इति वाच्यम्,
अकीर्तित एव यागादौ तादृश सामग्र्याः सत्वेनोक्तापत्तेर्दुर्वारत्वात् ।

अन्य समवायेन तत्तदात्मीय स्वर्गादिकं प्रति तत्तदात्मत्वेन तादात्म्य प्रत्यासत्त्या समवायिकारणत्वस्य तत्तदात्मीयाश्वमेधादिनिष्ठोपधायकता संबंधेन स्वर्गादिकं प्रति तत्तदात्मीयाश्वमेधत्वादिना तादात्म्य प्रत्यासत्त्या कारणत्वस्य कल्पनी गौरवापत्तेरिति वाच्यं चेन्न गौरवापत्तेः । एवं प्रायश्चित्तादिनाश्यत्वेन दुरितापूर्वसिद्धिः ध्वंसस्यानिष्टदु क्रियाव्यापारत्वे कृतप्रायश्चित्तस्यापि गोवध्यादि ध्वंससत्वेन नरकोत्पाद प्रसंगात् । न च प्रायश्चित्त ध्वंसस्य प्रतिबंधकत्वोपगमात् न दोष इति वाच्यम् प्रायश्चित्तानंतरं कृतस्यापि गोवधादेर्नरकजनकत्व प्रसंगात् । न च तत्तत्कर्मानंतर कृतप्रायश्चित्त ध्वंसादेस्तत्तत्कर्मजन्यनरक प्रतिबंधकत्वोपगमात् नोक्त दोष इति वाच्यम् उपदर्शित रीत्या तादृशोपगमासंभवादित्याहुः अपरे तु तत्वज्ञान नाश्यतया दृष्टसिद्धिः ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुने इत्यादि स्मृतेः । न च तत्वज्ञानस्य भोग प्रतिबंधकतया फलजनकत्व पासास्यतीति वाच्यं सौभरि प्रभृतीनां तत्वज्ञानिनां भोगश्रवणेन तत्वज्ञानस्य भोगप्रतिबंधकत्वाभावात् । किंचापूर्वानंगीकारे तत्वज्ञानेनापि विहितनिषिद्धा

चर्णेन भोगापत्तिः तदंगीकारे तु वासनाविरहेण पूर्वानुत्पत्त्यो-

त्पत्त्यभावात्, न च वासनाया भोग नियामकत्वं संभवति

तत्व ज्ञानिनां भोगाप्रसंगात् । एवं पूर्वं पुण्य प्राप्तिश्च तद्यो

मैत्र्यं जायते इत्यादि स्मृतयोप्य पूर्वे प्रमाणमिति प्राहुः तच्चा

पूर्वं द्विविधं परमा पूर्वं कालिका पूर्वं च दर्श पूर्णमासाभ्यां

यजेत स्वर्गकाम इति प्रधानविधिबोधितस्य दर्शपौर्णमासत्वा-

वच्छिन्ने स्वर्गसाधनत्वस्यानुपपत्त्या यथा परमा पूर्वकल्पनं तथैवा-

ग्नेयोष्टाकपालोभवत्यमावास्यायां ऐन्द्रदधि भवत्यमावास्यायां ऐ-

न्द्रं पयोभवत्यमावास्यायां आग्नेयोष्टा कपालो भवति पौर्णमा-

स्यां ताभ्यामग्नीषोमीयमेकादश कपाल पौर्णमासे प्रायच्छत उपांशु

यागमंतरा यजतीति षाड्भिर्द्रव्य देवता संबंध रूप यागस्य प्रथम प्रतीति

रूपोत्पत्ति प्रत्याय कतयोत्पत्ति वाक्यैः प्रत्येकमाग्नेयत्वाद्यवच्छिन्ने वो-

धितस्य परमा पूर्वद्वारक स्वर्गसाधनत्वस्यानुपपत्त्या कालिका पूर्वा-

णां कल्पनस्यापि औचित्यावर्जितत्वेन युक्तत्वात् । अथ षडाग्नेया-

दिभिः कालिका पूर्व षड्वद्वारा स्वर्गजनन संभवेन परमा पूर्वमाना-

भाव : वर्णां कालिका पूर्वाणामेव स्वर्गपर्यंतावस्थान संभवात् । नच

षणां स्वर्ग हेतुत्वे गौरवादेकमेव परमापूर्वं तद्धेतुतयासिद्ध्यतीति

वाच्यं, परमापूर्वोपगमे तत्रैव कालिकापूर्वाणां हेतुत्वस्य वाच्यतया तत्क

ल्पनायामेव गौरवात् । न चाघारादीनां संगानां षट्कालिकापूर्वेषु

कारणत्व कल्पनायां गौरवात्तज्जन्यत्वेन परमापूर्वं कल्प्यत इतिवा

च्यम्, परमापूर्वकल्पनापेक्षया लाघवेन कालिकापूर्वे घेवा घारा-

दिजन्यतावच्छेदकजाति कल्पनस्यौचित्यात् । नच च मांग द्वोस्मर

णादि जन्यस्यैवास्तु परमापूर्वत्वं तत्रहि होरस्मरणं साक्षात् आग्नेया

याग षड्ंच कालिका पूर्व द्वारा कारणमीति वाच्यम् । होरस्मरणादिम

जन्यस्यापूर्वस्य षडाग्नेयादि जन्यत्वोपगमो गौरवात् किंच कालिका

पूर्वाणां स्वर्ग हेतुत्वे स्वर्गनाश्यत्वे लाघवं परमापूर्व स्वीकारे च कालिक

पूर्वाणां परमापूर्वनाशकं परमापूर्वस्य च स्वर्गनाशक इति नाश्य नाश

भावद्वयकल्पने गौरवादिति चेन्नैवम् प्रधान विधि प्रवृत्ति कालेद

पौर्णमास जन्यं स्वर्गसाधनमपूर्वं सिद्ध्यल्लाघवादेकं सिद्ध्यति तथ

च परमापूर्वं पश्चात् षडाग्नेयादीनां क्रामिकत्व ज्ञाने तदुपपादक कालिकापूर्वक

ल्पनस्य फलमुखत्वेनादोषात् । परन्तु स्रक चंदनादि विषय संबंधा-

धीन विजातीय सहस्रादि संख्य स्वर्गादि फलजनकत्वेनैव प्रमाण-

पर्यवसीदिः कालिका पूर्वाणां स्वर्गादि फल जनकत्वे षड्धिक सहस्र कार्य

कारण भावस्थले बहु सहस्र कार्य कारणभाव कल्पनापत्तेः न च कालिका पूर्वस्य

जनकतावच्छेदकतयैव जाति रेव कल्प्यत इति वाच्यं, तादृशे जातेर-

न्यादि जन्यतावच्छेदक जाति व्यापकत्वे षडंतर्गत कतिपयानुष्ठानापि

फल प्राप्ति प्रसंगात । तदव्यापकत्वे जाति संकरापातात् । जन्यतावच्छे-

दकतया नानाविध स्वर्गादि निष्ठैक जातिकल्पना न युज्यते चंदनसंयोगा-

दि जन्यतावच्छेदक जातिभिः सम्यं संकर प्रसंगादिति तदसत् कालिकापूर्व

संबंधेन दर्शपौर्णमासत्वादिनैव नानाविध स्वर्गत्वावच्छिन्ने हेतुत्वात्

कालिका पूर्वाणां च धर्मत्वेतादृष्टत्वेन वा सुखत्वावच्छिन्ने कार्यत्वा

वच्छिन्ने वा हेतुत्वात् न च दर्श पौर्णमासादेरेक जातीय परमापूर्व

हेतुत्वं परमा पूर्वस्यत्वेक जातीयस्य नानाविध स्वर्गत्वावच्छिन्ने इति वाच्यं

श्रुत्या दर्शादौ स्वर्ग हेतुत्वबोधनात् युज्यते चैतत् परमा पूर्वक कर्मणां

विशिष्य हेतुत्वं स्वर्गे परमापूर्वस्येति कल्पना सपदस्य स्वर्ग एव कर्मणां

विशिष्य हेतुत्वे लाघवात् शक्त्यनुग्रहाच्चेति दिक्। अथ तथापि
दर्शपौर्णमासस्थले कियन्त्यपूर्वाणीति चेदत्र प्राञ्चः दर्शत्रयेण प्रत्येक
माग्नेयाद्येकैकापूर्वं जनयित्वा तत्त्रयद्वारा एकं दर्शसमुदायापूर्वं
जन्यते एवं पौर्णमासत्रयेण प्रत्येकमाग्नेयाद्येकैकापूर्वं जनयित्वा-
~~तत्त्रय~~ तत्त्रयद्वारैकं पौर्णमाससमुदायापूर्वं जन्यते ततः षड्विधकालिका
पूर्वैर्मध्यमसमुदायापूर्वद्वारा फलातिरिक्तापूर्वं परमापूर्वं जन्यत इति
नवापूर्वपक्षः न च दर्शत्रयस्य पौर्णमासत्रयस्य च चरमकारणस्य
साक्षादेव मध्यमसमुदायापूर्वजनकता संभवेन तज्जन्यकालिका
पूर्वे मानाभावात् सप्तापूर्वपक्ष एव श्रेयानिति वाच्यम् तस्यापि उत्तराङ्ग
दाक्षिणादिसमयपर्यन्तमनवस्थित्या तज्जन्यकालिकापूर्वस्याप्यावश्य-
कत्वादिति वदन्ति नव्यास्तु मध्यमसमुदायापूर्वद्वये मानाभावात् षड्-
दर्शादियागैः कालिकापूर्वषट्कद्वारैव परमापूर्वं जन्यत इति सप्तापूर्वपक्षः
न च पंचाग्नेः पंचापूर्वद्वारा षष्ठं न च साक्षादेव परमापूर्वं जन्यतामिति
किं षष्ठेन कालिकापूर्वेण तथा च षडपूर्वपक्ष एव श्रेयानिति वाच्यम्
षष्ठेनाप्युत्तराङ्गदाक्षिणादिसहकारेणैव परमापूर्वजननात्तावत्काल

~~मनवाप्ती~~ मनवाप्त्येत्याकालिका पूर्वजननात् न चामावास्यायाममावास्यया

यजेत पौर्णमास्यां पौर्णमास्या यजेतेति विधिबोधितस्य दर्शत्वावच्छि-

न्न पौर्णमासत्वावच्छिन्न कारणताद्वयस्य निर्वाहाय मध्यम समुदाया

पूर्वद्वयमवश्यं कल्पनीयमिति वाच्यं, दर्शत्वादेः कारणतावच्छेद-

कत्वपर्यंतस्याविषयतया कारणतैक्यलाघवेन अमावास्यायामित्यादि

विधिभ्यामेकस्यैव दर्शपौर्णमासोभय साधारणधर्मावच्छिन्नकारण-

त्वस्य बोधनात् दर्शत्व पौर्णमासत्वाभ्यां च कारणताद्वयमप्रामाणिकं,

कारणतैक्यलाघवेनोभय साधारण वैजात्यस्यैवावच्छेदकतया कल्प-

नौचित्यात्। न च दर्शत्वं पौर्णमासत्वयोः कारणतावच्छेदकत्वं विधि

प्राप्तं, प्रमाणाभावात्। न चैकरूपेण दर्शपौर्णमासयोः कारण-

तायामकृतदर्शस्यापि कृत पौर्णमासस्य स्वर्गोत्पादापत्तिरिति वाच्यं, यथा-

पूर्वभावं न तदयोगादिति प्राहुः। अथ यज देवपूजायामिति शाब्दिकस्मृ-

ति बलेन पूजाया गौरवित प्रीति हेतुक्रियारूपतया यागस्य देवताप्रीति

हेतुत्वे तत्द्वारैव यागस्य स्वर्गहेतुतास्तु किमपूर्वेण न च देवताप्रीतेः

देवतानिष्ठसुखात्मकतया तस्य यागवत् क्षणिकत्वेन कथं स्वर्गजनकत्व-

मिति वाच्यम् । प्रीत्यनुभव जनित संस्कारद्वारा प्रीतेरपि स्वर्गहेतुता संभवात् । न च संस्कारजन्यस्य स्मृतित्वनियमेन स्वर्गस्यापि संस्कारजन्यत्वे स्मृतित्वापत्तीरिति वाच्यम् । तादृश नियमे मानाभावात् । अन्यथा तत्तत्संस्कारस्य प्रत्यभिज्ञा हेतुत्वपक्षे तस्याः स्मृतित्वापत्तेः न च यागस्य देवता प्रीति हेतुत्वेपि तस्याः स्वर्ग हेतुत्वे मानाभावः नहितस्याः स्वर्गजनकत्वं विना यागजन्यता मात्रेण व्यापारत्वं संभवति तज्जन्यत्वे सति तज्जन्यजनकस्यैव व्यापारत्वादिति वाच्यं । यावत्प्रीति हेतु क्रिया सा तत्प्रीतिजन्य तत्कर्तृनिष्ठफलजनिकेति व्याप्तेः अव्याप्तौ चेयं राजप्रीति हेतु भूतायां रजशत्रुनाशन क्रियायां । किंच स्वर्गकामो यजेतेति श्रुतिबलात् यागस्य स्वर्गसाधनत्वे सिद्धे तस्य साक्षात् साधनत्वा संभवेन परंपरासाधनत्वं प्रामाणिकं तस्य च व्यापारं विनानुपपद्यमानतया व्यापारकल्पना वश्यकत्वेतिरिक्तस्या दृष्टस्य व्यापारत्वकल्पनमपेक्ष्य क्लृप्ताया देवता प्रीतेरेव व्यापारत्वं कल्प्यते लाघवात् । न च देवताप्रीतेस्तदनुभवजन्य संस्कारस्य च स्वर्ग व्यधिकरणतया स्वर्ग हेतुत्वं

न संभवतीति वाच्यम्, पूजके प्रीतिर्मेऽस्त्विव इत्यादिवचनेन तस्यापि विलक्षण-

संबंधेन स्वर्गसामानाधिकरण्यसंभवात्, अन्यथा पूजकइति सप्तम्यर्थस्य दुर्व-

चत्वापातात् एवंच तादृशसंबंधेन देवताः प्रीतेः स्वर्गहेतुत्वं संभवत्येव,

प्रीत्यनुभवजनितसंस्कारस्य च स्वजनकधीविषयत्वादिरूपतादृश

विलक्षणसंबंधेन हेतुत्वं वोध्यमिति चेन्मैवं देवताप्रीतेस्तदनुभवजनित

संस्कारस्य च विलक्षणसंबंधेनोक्तपरंपरासंबंधेन च स्वर्गहेतुत्वे गौ-

रवेण लाघवात् फलसमानाधिकरणादृष्टस्यैव कल्पयितुमुचितत्वात्। किं-

चोक्तसंस्कारस्य व्यापारत्वे लोकसंग्रहार्थमनुष्ठितेन यागादिना तत्वज्ञा-

निनामपि भोगापत्तिः तत्वज्ञानिनां बहुशोभोगश्रवणेन भोगे मिथ्या

ज्ञानजन्यवासनात्मकदोषस्य हेतुत्वासंभवात्। अदृष्टस्य व्यापारत्वे पक्ष-

मे तु वासनाया अदृष्टकारणत्वेन तदभावेनादृष्टानुत्पत्त्या भोगापत्त्यसंभ-

वात्। न च तत्वज्ञानेन देवताप्रीत्यनुभवजन्यसंस्कारनाशान्नोक्तापत्तिरि-

ति वाच्यम्, तन्नाशकतावच्छेदकलघुसंबंधांतरासंभवेन स्वसमानाधि-

करणकृतिजन्यकर्मार्हीतप्रीतिविषयत्वादिरूपसंबंधस्यैव तन्नाशकता-

वच्छेदकत्वकल्पने गौरवात् तत्वज्ञानस्योक्तसंस्कारनाशकत्वे तत्वज्ञानि

कृत पित्रादि स्वर्गार्थ कर्मणां निष्फलत्व प्रसंगाच्च। एतेन सर्वत्रादृष्टं

कर्तृगतमेव साक्षात्संबंधेन तत्र यागादेर्जनकत्वेनावधवात्। न च गया

श्राद्धादिजन्यं फलं पित्रादिगतमेव न तु कर्तृगतं यत्राम्नायात पितृपिंड-

तन्ये पद् ब्रह्मशाश्वतमित्यादि वचनादित्य दृष्टस्यापि पित्रादिगतत्वेन

कथं तस्य कर्तृगतत्वनियम इति वाच्यं। तत्राप्य दृष्टस्य कर्तृगतत्वेन

तान्नियमानपायात्। अन्यथा मुक्ते पितरि गयाश्राद्धजन्यादृष्टानुत्पत्त्या

निष्फलत्वेन सांगस्यापि वैदिककर्मणः फलजनकत्वव्यभिचारेणाविश्वा-

साद्धि धैरनुनुष्ठान लक्षणाप्रामाण्यापातात्। न च फलावाप्तेः पूर्वमेव

कर्तुर्मुक्तौ तद्गता दृष्टनशेनापितुः फलं न स्यादिति वाच्यं गयाश्रा-

द्धादि जन्यादृष्टस्य स्वसमानाधिकरण भोगाजनकत्वेन तन्मोक्षदशायाम-

पि सत्वोपगमात्, न च पुत्रकृत गयाश्राद्धेन मुक्तस्यापि पितुर्ब्रह्मलोकावाप्तिः

स्यात् ज्ञानिनोभोगादयेनं दोषस्य भोगाजनकत्वादिति वाच्यं इष्टत्वात्। न च

श्राद्धादिजन्यादृष्टस्य कर्तृत्वे युगपदेकोद्देश्यकानेक कर्तृक श्राद्धादिस्थ-

ले कर्तृभेदेनादृष्ट भेदात् गौरवमिति वाच्यम्। भोक्तृगतत्वनियमेऽपि

प्रति पुरुषं श्राद्धादि जन्यादृष्टस्य भोक्तृभेदेनादृष्ट भेदेन गौरवस्य तुल्यः

त्वात्, न च फलस्य स्वसमानाधिकरणपुण्यजन्यतानियमेन कथं पुत्रादि-
गतादृष्टेनापि पित्रादौ फलमिति वाच्यम्, तादृशनियमे मानाभावादित्य-
पास्तं । गयाश्राद्धादिजन्यादृष्टस्य कर्तृगतत्वे तस्य पित्रादिगतफलं
प्रति समवायसंबंधेन हेतुत्वासंभवात् स्वजनककर्मोद्देश्यतासंबंधेन
हेतुत्वोपगमे च गौरवात्, पित्रादिगतादृष्टं प्रति तु गयाश्राद्धादेरुद्देश्य-
तासंबंधेन हेतुत्वं तस्य चोक्तपरंपरासंबंधापेक्षया लघुत्वेनास्मन्मते
न किंचिदपि गौरवं । किंच गयाश्राद्धादेः कर्तृमात्रगतादृष्टजनकत्वे
पित्रादेरुद्धाराय तत्वज्ञानिनां तदनुष्ठानानुपपत्तिः कर्तुर्दोषाभावेनादृ-
ष्टानुत्पत्त्या फलासंभवात्, न चैवं श्येनादितोऽपि भोक्तृगतमेवादृष्ट-
मुत्पद्यतामिति वाच्यम्, इष्टत्वात्, किंच पुत्रनिष्ठगयाश्राद्धादिजन्या-
दृष्टेनापि मुक्तस्यापि भोगाय जन्मोपगमेन न स पुनरावर्तत इति श्रुति-
विरोधः तुल्यन्यायेन पुत्रकूटसाक्ष्यादिना मुक्तपितुर्नरकादिप्रसंगस्यापि
दुर्वारतया दुःखेनात्यंतं विमुक्तश्चरतीत्यादिश्रुतेरपि विरोधो दुर्वारः त-
स्मादादृष्टस्य भोक्तृगतत्वं नियतमेव फलस्य कर्तृगतत्वं त्वौत्सर्गिकं ।
अत एवोक्तं शास्त्रदर्शितं फलमनुष्ठानकर्तरीत्युत्सर्ग इति । अत एव यत्र स्व-

पर विशेषा पुरुषकोणे फलं अयते तत्र परकीय स्वर्गादि कामनयापि प्रवृत्ति-

र्विनियोगाचाचारः शिष्टानां संगच्छते । स्वर्गकाम इत्यादौ साधारण्येन

स्वपर साधारण स्वर्गस्य फलत्व लाभात् । ननु स्वरितेत् यजधातूत्तरात्म-

नेपदं यागरूप क्रियाफलस्य कर्तृगतत्वं बोधयति स्वरितञितः कर्त्र-

भिप्राये क्रियाफले इत्यनुशासनात् कर्त्राभिप्रेतं संबध्नातीति कर्त्रभि-

प्रायः कर्मोपपदादभिप्रेतः कर्तर्यण् र प्रत्ययेन तत्पदनिष्पत्तिः एवं

भूते क्रियाफले तात्पर्य विषये सत्यात्मनेपदमित्यनुशासनार्थः तथा च यजेते

ति विधिबोधित यागात् यदि परगतं स्वर्गादि फलं तदा यजेतेत्यात्मनेपद

मसाध्वेव स्यादिति चेदत्र चिंतामणिकृतः यजेतेत्यात्मनेपदं क्रियाफल-

स्य कर्त्रनिष्ठत्वेपि कर्त्रभिप्रेतत्व मात्रेणैव साधुः अभिप्रेतः प्रसिद्धं चार्थ-

कत्व संबन्धेनाभिप्रेतत्वस्येच्छा विषयत्व रूपत्वादित्याहुः मिश्रास्तु एवं सति

यत्र विशेष्यैव पुरुषविशेषस्यैव फलार्थं यत्कर्मोक्तं तदपि पुरुषांतर्गत

फल कामनया कृतं पुरुषांतर फलजनकमस्तु एवं च परपुत्रादि प्रतत्वार्थ-

मपि जातेष्ट्यादिकमस्तु दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्नि-

त्यादावपि पर पित्रादि लाभापत्तिश्च आत्मनेपद मात्र फलस्य कर्तृगतत्व-

एव साधुः स्वोत्तोजित इति सूत्रस्य कर्त्रभिप्रायं चेत्क्रियाफलमाभिप्रैति
अभिसंबध्नातीति व्याख्यानात् फलस्य कर्तृनिष्ठत्व एवात्म-
नेपदस्य साधुत्वात्। अतएव कर्त्रभिप्रायक्रियाफलयोः समानाधि-
करण्यमप्युपपद्यते अभिप्रायस्येच्छार्थकत्वे सामानाधिकरण्या-
नुपपत्तेः न चाभिप्रायशब्दस्येच्छाविषयलक्षणया तदुपपत्तिरिति
वाच्यम् गौरवात्। अतएव यजन्ति याजकाः पचन्ति पाचका इति प्रत्युदाहरणं
संगच्छते अन्यथा याजकादीनामपि क्रियाफलाभिप्रायसत्वादात्मनेपदा-
पत्तेः न च तेषां वेतनमात्रे अभिप्राय इति वाच्यम् सांगफले सत्येव वेतन-
मिति फलाभिप्रायस्यापि वेतनोपरागेण सत्वात् तस्मात् यथा ससंबंधिक
पित्रादि पदस्य संबंधवाचक पदासमभिव्याहारे स्वापित्रादिनाबोधकता
नियमस्तथा कर्तृविशेषणकामनाविषयफलबोधकशब्दस्यापि तादृश
पदासमभिव्याहारे स्वीयसंबंधेनैव फलबोधकता अतएव स्वार्थिक सं-
कल्पवाक्ये पित्रादिगत स्वर्गकामनाभिलाषे स्वर्गादौ पित्रादिसंबंधवत्
स्वगतस्वर्गादिकामनाभिलाषे पदांतरेण स्वसंबंधो न निर्दिश्यते अपि
तु स्वर्गकामोऽहमित्यादेव प्रयुज्यते एवं च स्वगतस्वर्गादिकामनयैव माता

पितृगत स्वर्गादि कामनयापि पुष्करिण्यां यागमहादान दुर्गापाठादेः
शिष्टैराविगानेनाचरणात् । तत्र तद्गतत्वेन फलबोधकप्रत्यक्ष श्रुति-
विरहेपि स्वपरसाधारणस्वर्गकामः पुष्करिण्यां यागादिकं कुर्यादि-
ति विशिष्टैवश्रुतिः कल्प्यत इत्याहुः अत्रेदं विचार्यते चिंतामणिकार
मतमेव सम्यक् तथाहि । शिष्टाचारानुरोधेन विशेष्यश्रुति कल्पना
मपेक्ष्य स्वर्गकाम इति प्रत्यक्षाविध्यंशे शिष्टाचारबलेन सामान्य परत्वा-
वधारणे नौत्सर्गिक स्वत्वपरताबाधो युक्तः पितृभ्य इत्यादौ च स्वपितृ-
भ्यः सुतो दद्यादित्यादि वाक्यांतरैक वाक्यतया शिष्टाचारेण च संबंधि
शब्दत्वेनौत्सर्गिक स्वपितृ परत्वमेव युक्तं, न चाभिप्रायशब्दस्येच्छार्थ-
कत्वेपि अभिप्रेतार्थकता नोपपद्यते इति संबंध परत्वैव युक्तेति वाच्यम्
अभिप्रायशब्दस्य भावघञंततया इच्छापरत्वेपि कर्तुरभिप्रायो यस्मि-
न्निति बहुव्रीहिणा तद्विषयबोधकता संभवात् । यद्वा क्रियाफले कर्त्रभि-
प्राये सतीति व्याधिकरण फलांतोत्तर सप्तम्याविषयार्थकतया फलस्या-
भिप्रायविषयतालाभः अथवाभिप्रियते स्माविति कर्म व्युत्पत्त्या कर्त्र-
भिप्रेत क्रियाफल इत्यर्थलाभः न च क्रियाफलस्य कर्त्रनभिप्रेतत्वे काम-

नाविषयसाधनत्वाभावात् क्रियागोचरकृतेरेवानुपपत्त्या यजन्ति

याजकाः पचन्ति पाचका इत्यादि प्रत्युदाहरणासंगतिरिति वाच्यम्, ऋत-

्विगादेर्यजमान स्वर्गादिरूप यागादिजन्य फल कामनाविरहेऽपि स्वं-

पत्या यागादि प्रयोज्य दक्षिणालाभादिरूप फलगोचरकामना सहकृत-

फल प्रयोजकता ज्ञाना यागादि कृत्युपपत्त्या तादृश प्रत्युदाहरण-

संगतेः नहि स्वर्गादिवद्दक्षिणादेगत स्वत्वं यागादिजन्यं तथापीति

तादृश फलस्य कर्तृसंबद्धतया कर्त्राभिप्राय पदस्य कर्तृसंबद्धार्थकत्वेऽपि

तादृश प्रत्युदाहरणासंगतेः अतएव ऋत्विग् सूपकारादेः फलभागित्वा

भावान्न फलभागित्व घटित कर्तृत्वमितिटीकाकृतः कर्त्रभिप्रायइत्यस्य

च फलभागित्वा विशेषित क्रियानुकूल कृतिमत्वमेव कर्तृत्वमभिमतम्

मतः पित्रादि स्वर्गकामस्यापि कर्तृतया फलस्य तदभिप्रेतत्वेनात्मने-

पदानिर्वाहः अन्यथा कर्तुः क्रियाफलसंबंधप्रत्ययेन कर्तारं चेत् क्रिया-

फलभाभि प्रैति संबध्नातीति व्याख्यायां नितरामसंगत्यापत्तेः अतएव

दक्षिणाद्युपरागेणापि यजमानस्वर्गादेः ऋत्विजां काम्यत्वे यजन्ते

याजका इत्येव स्वीयदक्षिणादि मात्रस्यैव तेषां काम्यत्वे तु यजंति-

याजका इत्युभयमेव समर्थितं ग्रंथकारैः अथ न विमुंचन्ति सामर्थ्यं

वाक्यार्थेषु पदानिनः यज्ज्वलन्तीह काष्ठानि तात्किंपाकं न कुर्वते

इत्यचेतनस्थले कर्त्रभिप्राये आत्मनेपदस्य महाचार्यैः प्रयुक्तत्वात

युक्तमिदमेवं कमलवनोद्घाटनं कुर्वते ये वृक्षं परिव्याप्यंते कंटका-

इत्याद्यचेतनस्थले आत्मनेपदानुपपत्तिरिति चेत् । न एतद्दोषाभिप्राय

य शब्दस्य संबंधार्थकतोपगंतृमतेपि तुल्यत्वात् । यदि च तत्रात्मने-

पदार्थाविवक्षणान्न दोषः अन्याभिप्रायविवक्षायामेवात्मनेपद-

स्यासाधुत्वात् अत एवोक्तं कर्त्रभिप्राय इति किं अन्याभिप्राये मा

भूदिति अत एव मल्लीनाथमिव पानकर्म कुरुते कामं कुरंगेक्षण-

इत्यत्रात्मनेपदमनर्थकमित्येव काव्यप्रकाशकृतोक्तं न त्वसाध्विति वि-

भाव्यते तथापि न क्षतिः अभिप्रायशब्दस्येच्छाविषयत्वेप्येतत

समाधानस्य तुल्यत्वात् । युज्यते वाभिप्रायशब्दस्येच्छाविषयत्व

मेव अन्यथा तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजत इत्या-

त्मनेपदश्रवणात् पितुर्दशरथस्यांधकमुनिपुत्रश्रवणवधजनित-

पापक्षयकामनया रामस्याश्वमेधानुष्ठानानुपपत्तिः न च स्वकीयावण

वधजन्यपापक्षय कामनयैव तदनुष्ठानं अंधकपुत्रस्य शूद्रत्वेन तद्वध-
जन्यपापक्षयार्थं ब्रह्मवधप्रायश्चित्तानुष्ठानानुपपत्तेरिति वाच्यं, रावण
वधजन्यपापक्षयार्थं रामेश्वरादिस्थापनस्य पुराणादौ प्रसिद्धतया
ब्रह्मवधप्रायश्चित्तस्य मुनिवधपापक्षयकारकतया तदनुष्ठानोपपत्ते-
रिति संक्षेपः । नव्यास्तु कर्तृगामिफलमेवात्मनेपदार्थो लाघवात्
यजते इत्यादावात्मनेपदस्य फलमात्रार्थकत्व एव यागजन्यफल-
वान् करोतीति वाक्यार्थमर्यादया फलस्य कर्तृगामित्वलाभाच्च । कर्त्र-
भिप्रेतफले शक्तौ च गौरवं । आत्मनेपदार्थाविवक्षयैव च यजन्तं या-
जका इत्यादि प्रयोग इति तन्न यजतीत्यादौ परस्मैपदार्थस्य पराभिप्रे-
तफलजनकत्वस्य धात्वर्थविशेषणत्वे नान्वयादात्मने-
पदार्थस्य कर्त्रभिप्रेतफलजनकत्वस्यापि तथान्वयौचित्यात् । अत्र
वदन्ति आत्मनेपदस्य कर्तरि परस्मैपदस्य च कर्त्रभिन्ने शक्तिः तयो-
र्यथायथं समवेतत्व संबंधेन आख्यातसामान्यार्थे फलेऽन्वयः फल-
स्य च धात्वर्थेऽन्वय इति वाक्यार्थमर्यादयैव कर्तृगामितादिलाभः ।
न च काम्यत्व संबंधेनैव कर्तृत्वाभिन्नयोरन्वया द्वाक्यार्थमर्यादयैव

कर्त्रभिप्रेतत्वादेरपि लाभसंभवत्वेति वाच्यं, इच्छाविषयत्वरूप काम्यत्वस्य समवायात्मक समवेतत्वापेक्षया गुरुत्वेन मन्मते-काम्यत्व संबंधेनान्वयबोधत्वादेः कार्यतावच्छेदकत्वे गौरवात्, अस्मन्मते समवेतत्व संबंधेनान्वय बोधत्वादेः कार्यतावच्छेदकत्वेन लाघवात्। अतएव खंडार्थत्वेऽपि कर्तृत्वभिन्नसमवेत फलजनकत्वयोरेव यथायथमात्मनेपदपरस्मैपदयोः शक्तिरिति कृतं पल्लवेन स चायं विधिः क्वचित्केवलकर्मविधायकत्वेन कर्ममात्रविधिरित्युच्यते यथाग्नि होत्रं जुहोतीत्यादि। क्वचिद् गुणविधि-यथा दध्ना जुहोतीत्यादिः। तत्र वाक्यांतर प्राप्त होमानुवादेन दध्यादिरूप गुणविधानात्। क्वचिद्विशिष्टविधिः यथा सोमेन यजेतेत्यादिः तत्र यागस्य तदीय सोम द्रव्यस्य चा प्राप्तत्वेन सोमद्रव्यविशिष्ट याग विधानात्। क्वचिद् गुणद्वय विशिष्टविधिः यथा उपसद्भिश्चरित्वा मासमेक माग्निहोत्रं जुहोतीत्यादिः तत्रोपसदिष्टयुत्तरत्व मासात्मककालरूप गुणद्वय विशिष्टस्य कर्मणो विधानात्, अत्रेदं बोध्यं, उपसद्भिश्चरित्वा मासमेकमग्नि

होत्रं जुहोतीति श्रुति बोधितं यावज्जीवमग्नि होत्रं जुहोतीति श्रुतिबोधिताग्निहोत्र पदमुख्यार्थ यावज्जीव साध्याग्निहोत्र भिन्नं मासैक साध्याग्नि होत्रं कर्मान्तरमेव तत्र च यागविशेषे लक्षणया प्रयुक्तोऽग्निहोत्र शब्दो मुख्यार्थाग्निहोत्र धर्म प्राप्त्यर्थः। अतएव तस्य गौणाग्निहोत्रत्वेन व्यपदेशः। ननु उपसद्गिरीत्यादि वाक्येत यावज्जीव साध्याग्निहोत्र एव मासरूप कालोपसदाद्यन्यतमगुणरूपं विधीयते न तु कर्मान्तरं तथा च तत्रापि अग्नि होत्रशब्दो मुख्य एव न तु गौण इति नोक्त व्यपदेशसंगतिरितिचेन्न प्राप्ताग्निहोत्रानुवादेन गुणद्वयविधाने विधेयभेदेन वाक्यभेद प्रसंगात्तादृश वाक्यस्य गुणद्वय विशिष्टकर्मान्तर विधायकत्वोपगमात्। तथा चोक्तं प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः अप्राप्ते तु विधीयंते बहवोऽप्येकयत्नत इति ननु विशिष्ट विधानेऽपि गुणद्वयविधानमस्त्येव कर्मान्तरस्याधिकं विधानमिति तत्पक्षेऽपि विधेयभेदेन वाक्यभेदस्य दुष्परिहरता। न च विशिष्टस्यैक्याद्विधेयस्यैकं विशिष्टस्य विशे-

षण विशेष्याभ्यामनतिरिक्तैक्या संभवात्। अथ विधेय भेदेन न वाक्य भेदः अपितु विधान भेदेन विशिष्टांतर गतत्वेनानेके षाम-पेक्षमेव विधानमिति न वाक्यभेदः अप्राप्तत्वित्यादिना कर्मणो प्राप्तत्वे तस्य नानागुणोपरागेणापेक्षमेव विधानमित्युक्तं विधानं च न ज्ञानं प्रतीति कर्मणि नानागुणानामेक ज्ञान संभवेन वाक्य भेदा संभवात् अपितु विधेयताख्ये ~~विषये~~ विषयता विशेष: नाना विशेषण विशेष्य घटिते विशिष्टे एकैव विषयतेति चेन्न, विशिष्टांतर्गत विशेषणानां विशेषणत्वेन नानाधर्मावच्छिन्ना भेदो विलक्षणा विषयता विशेष्य च विशेष्य विधया अन्यादृशी विषयता तासां च विषयतानामैक्या संभवेन विधानैक्य कथनस्या युक्तत्वात्। अन्यथा प्राप्तकर्मानुवादेन गुणद्वय विधानेपि गुणद्वयरूप विधेय विशिष्टानुवाद्य कर्मणोपि विषयतैक्य मुपगम्य वाक्यभेद परी-हार संभवात्। नैवं। विधेय विशेषणतानापन्न विधेय विषय-ताया अभेदो वाक्यैक्य प्रयोजक इत्यनेक गुणविशिष्टस्य विधाने गुणानां विषयताभेदापि नाना गुणविशिष्ट कर्मणो विधेयस्य-

विषयतैक्याद् वाक्यैक्यं विधेयस्यैक्येऽपि उद्देश्यभेदेन विधेय
विषयताभेदादुद्देश्यभेदस्थलेन विधेयैक्येऽनेकवाक्यता अर्थै-
क्यादेकं वाक्यमिति जैमिनिसूत्रमपि नयेषां पदानामेकवाक्यता
तत्तत्पदार्थाभेदपरं तत्तत्पदार्थानां मिथो भेदात् नापि तत्तत्पदार्थ
विषयताभेदपरं सर्वत्रैव वाक्यार्थप्रविष्ट विशेषणविशेष्य
संसर्गविषयत्वानां प्रकारता विशेष्यता संसर्गतारूपाणां विल-
क्षणतया भेदस्यावश्यकत्वादेकवाक्यविलयप्रसंगात् किंतु
तावत्पदार्थविषयितानां साक्षात्परंपरया वा अवच्छेद्यावच्छेद-
कभावापन्नमेव अवच्छेद्यावच्छेदकभावापन्नविषयिताकूटस्यैक
विषयितातुल्यत्वात्। अतो विशृंखलविषयिता एव वाक्यभेद
व्यवहारमासादयति। एवं च नानागुणविशिष्टस्य कर्मणो विधेयत्वे
नानागुणानां विधेयकर्मणि युगपद्विशेषणतया विधेयविषय-
तैक्यात्। तद्वारा नानागुणविषयितानामवच्छेद्यावच्छेदकभावात्
कर्मतद्गुणविषयितयोश्च साक्षादेवावच्छेद्यावच्छेदकभावापन्न
तया वाक्यार्थान्तर्गतवस्तूनां न विशृंखला विषयता इति न वाक्य

भेदः, न चैवं प्राप्तकर्माणि अनेकगुणविधानेऽपि कर्मण्येकविधावि-
ता या विधेयतया भासमानगुणद्वय विषयताया अवच्छेद्यावच्छे-
दकभावेनैक वाक्यतोपपद्यत इति वाच्यं । विधेयान्तरविशे-
षणतया भासमान विधेय विषयिताभेदे उद्देश्यविषयिताभेदस्याव-
श्यकतया तादृश विधेयविषयितयोः परस्परं अवच्छेद्या-
वच्छेदकभाव विरहात् । अत एवाख्यात द्वय घटितं नैकं वाक्यं
आख्यातार्थस्य विधेयान्तर विशेषणतया विधेयत्वनियमेन तद्विष-
यिता निरूपितोद्देश्यविषयिताभेदस्यावश्यकत्वात् । एवं च चैत्रः
खड्गी कुंडलीत्यादौ उभयविधेयकेनैकवाक्यता स्वीक्रियते स्वीक्रियते
तु खड्गी कुंडली चैत्रो दंडीत्यादावेक विधेयक एवेति दिक्, अधिक-
मुक्तं प्राक् । क्वचिद्विकल्प विधिः यथा व्रीहिभिर्यजेत यवैर्यजेते-
त्यादिः स च प्रसंगान्मंगलवादे संक्षेपेणोक्तोऽप्यधिकोक्तये पुनः
प्रस्तूयते तत्र मिथो विरुद्धयो विधानं विकल्पविधिः यथा व्रीहियव-
यो द्रव्ययोरेकत्र यागेऽकरणतया विरुद्धयोर्यागकरणतया विधानं नचैवं
अश्वमेध वाजपेयादीनां स्वर्गादि रूपैकफलेऽकरणतया विरोधे फलता-

भेदः, न चैवं प्राप्तकर्मणी अनेकगुण विधानेऽपि कर्मण एक विधायि-
ता या विधेयतया भासमान गुणद्वय विषयताया अवच्छेद्यावच्छे-
दकभावेनैक वाक्यतोपपद्यत इति वाच्यं । विधेयान्तर विशे-
षणतया भासमान विधेय विषयिता भेदे उद्देश्यविषयिता भेदस्याव-
श्यकतया तादृश विधेय विषयितयोः परस्परा अवच्छेद्या-
वच्छेदकभाव विरहात् । अतएवाख्यात इत्युपपादितं नैकवाक्यं
आख्यातार्थस्य विधेयान्तर विशेषणतया विधेयत्व नियमेन तद्विष-
यिता निरूपितोद्देश्यविषयिता भेदस्यावश्यकत्वात् । एवं च चैत्रः
खड्गी कुण्डलीत्यादौ उभय विधायके नैकवाक्यता स्वीक्रियते स्वीक्रियते
तु खड्गी कुण्डली चैत्रो दण्डीत्यादावेक विधायक एवेति दिक् आधिक-
मुक्तं प्राक् । क्वचिद्विकल्प विधिः यथा व्रीहिभिर्यजेत यवैर्यजेते-
त्यादिः स च प्रसंगान्मंगलवादे संक्षेपेणोक्तोऽप्यत्र विशेषोक्तये पुनः
प्रस्तूयते तत्र मिथो विरुद्धयो विधानं विकल्पविधिः यथा व्रीहियव-
यो द्रव्ययोरेकत्र यागेऽकरणतया विरुद्धयोर्यागकरणतया विधानं न चैवं
अश्वमेध वाजपेयादीनां स्वर्गादिरूपैकफलेऽकरणतया विरोधे फलसा-

~~क्ष~~ धनतया तद्विधानं वैकल्पिकं स्यादिति वाच्यम् । परस्पराभाव साहित्येन विधानस्य विवक्षितत्वात् । अश्वमेधादिवाजपेयाभाव साहित्यं पुरस्कृत्य स्वर्गादिरूप फलेकारणत्वनाविधानात् । ~~व्रीहि~~ व्रीहि-यवविध्योश्च परस्पराभाव साहित्यं प्रतीयते प्रथमतः प्रवृत्तविधी-वाक्यात् व्रीहि रूप द्रव्य संबंध पुरस्कारेण यागलाभात् द्रव्याकां-क्षानुदये न तत्र यागे यवरूप द्रव्यान्वया संभवात् व्रीह्यभावे कथं याग इत्याकांक्षयैव यवविधेरुत्थानस्य स्वीकरणीयतया वाक्या-व्यतिरेकेण ~~ह~~ तादृशाकांक्ष विषय बोधासंभवात्, आकांक्षाया अभिवृत्तेः तन्निवृत्तये यवविधौ वाक्य कल्पनेन समभिव्या-हृत व्रीह्यभाव साहित्य बोधक वाक्य ~~कला~~ तदभाव सहित यवस्य करणत्व प्रतीतिरवश्य मुपगंतव्यत्वात् । अतएवोभय करणक यागात् फलानुत्पत्या विकल्पेवुभयोर शास्त्रार्थता प्रवादः अथोक्ताकांक्षायां व्रीह्यभाव सहित द्रव्यांतरस्य करणत्वं न विषयः किन्तु व्रीहि सम्बधा-ना भावारकालीन यागे द्रव्यांतर करणकत्व मेवेति तत्रैव ~~यवै~~ यवै र्यजेते-ति वाक्यस्य तात्पर्यकल्पनीयं न तु व्रीह्य भावस्य करण सहकारित्वेन

तत्र तात्पर्यकल्पकाभावाद् काम्यप्रयोगेनापि तदर्थस्यालाभः वाक्यस्य यवकरणकत्वान्वयि नीयागे व्रीहिकरणकत्वाभावमात्रबोधकत्वात्। व्रीह्यभावस्य कारणत्वाबोधकत्वात्। दधि भुंक्ते पयो वा भुंक्ते इत्यादि लौकिकवाक्ये वाकारोव्यवहित पूर्वं पादृशविभक्तिसहित पदेन यत्र स्वार्थान्वयः प्रत्याय्यते तत्र पूर्ववाक्यस्य तादृशविभक्त्यंत समुदायार्थव्यवच्छेदबोधकताया वाकारे व्युत्पन्नत्वात्। अत एव तत्र दधिकर्मकत्वाभाव ~~...~~ एवं पयःकर्मकत्वान्वयिनि भोजने प्रतीयते न तु दध्याद्यभावकर्मकत्वं एवं वैकल्पिककारणत्वस्थले यागे यवस्य व्रीह्यभाव सहकृतस्य करणत्वलाभेपि अयवकरणयागात् फलोत्पत्त्यौ बाधकाभावात् फले व्रीह्यभावकरणकत्वस्य कथंचिदप्यलाभात्। एवं यागे व्रीह्यभावस्य करणत्वमपि बाधितं यागसामान्यस्य तद्व्यभिचारित्वात् यागविशेषे च तस्यान्यथा सिद्धत्वात् एवमेच्छाहप्रयोगे तदंगपुरोडाशे निर्वाहक व्रीह्यादेरपि न कारणत्वं इष्टसाधनताज्ञानादिघटित सामग्रीत एव तदुपपत्तेरिति परस्परा भाव साहित्येन कारणत्वरूप विकल्पस्य व्रीहियवादावसंभव एवायत्तु व्रीहि यव यागयोरपूर्वविशेषे कारणत्वमेव

वैकल्पिकं न तु यागे व्रीहियवयोरिति नोक्तदोषः अपूर्वे यागस्य एक
करणक यागजन्यापूर्वे ऽपर करणकयागाभावस्य च कारणतया अव्या-
हतत्वात्। विकल्पमुखी चाकांक्षत व्रीह्यभावे कथं यागइत्याकारिका
अपि तु व्रीह्य संपत्त्या व्रीहियागाभावे सति कथं फलमित्याकारकैवेति।
तदतीवाव्युत्पत्ति विजृंभितं। प्रागुत्पन्न व्रीह्यादि यागस्य फलजनेन सह-
कारि वोऽनाकांक्षितत्वेन तत्र विधि तात्पर्य कल्पकाभावात् व्रीहिभिर्य-
जेतेत्यादि श्रुतेश्च श्रुत्यंतर प्राप्त यागानुवादेन द्रव्य विधायकत्वा वै-
कल्पिक याग विधित्वासंभवात्। तादृश श्रुतेर्याग विधायकत्वे प्रधान
विधित्वेन परस्पर साकांक्षता विरहात् विकल्पमुख्या आकांक्षाया अ-
योगेन वाकार कल्पकाभावाच्च। अन्यथाश्वमेधवाजपेयादीनां
विधिस्थलेऽपि वाकार कल्पनापत्तेः न च तत्र प्रकरणभेदान्न साकां-
क्षतेति तत्कल्पकाभाव इति वाच्यं, तत्र वात्रापि प्रधान यागभेद प्रक-
रणभेद प्रकरणभेद ध्रौव्यात्। यत्तु उक्त व्युत्पत्त्यनुरोधेन व्रीह्य
करणकत्वान्वयि यागे यवकरणकत्वान्वय एव स्वीकरणीयः एव
मपि व्रीहियवोभय यागस्य न फल साधनत्वं प्रामाणिकं तस्य विध्य

विषयत्वात् । तादृशान्वय बोधस्याकाँक्षितोपि प्रथम विधेर्यागत्व
सामानाधिकरण्येन व्रीह्यन्वय पतया व्रीह्यकरणक यागस्यापि
चोदिष्ट साधनत्वं तदा तादृशो यागः किं द्रव्य करणक इत्याकांक्षायाः
सुलभत्वात् परस्पर करकत्वा द्यभावान्वयोनि यवकरणकत्वादि-
नाना कल्प्य विधिरेव वैकल्पिक कारणता विधिः अश्वमेधादौवि-
धिर्नैतादृशः, तत्र फले वाजपेयादि फल करणकत्वाद्यभाव बोधकाभा-
वादिति तदपि न तथा सत्यपि व्रीहिभिर्यजेतेति । विधिजन्यबोधे
यवकरणकत्वाद्यभावाभानात् । उभयकरणक यागस्यापि तादृशविधि
~~विषय~~ विषयताया फलजनकताया दुर्वारत्वात् । यवैर्यजेतेत्यत्र
यवकरणकत्वान्वयोनि व्रीहि करणकत्वाभावभानेपि लाघवात् व्रीहि
करणकत्वाभावाघटित धर्मस्यैव स्वर्गादि कारणतावच्छेदकतायाः क-
ल्पनात् । तद्रूपाक्रान्ततया उभयकरणक यागस्यापि फलसाधनताया-
दुर्वारत्वात् । नहि व्रीहिकरणकत्वाभावस्याकांक्षानुरोधात् यव विधि
जन्यबोध विषयस्य कारणतावच्छेदकत्वेपि किमपि प्रमाणमस्ति ।
एतेन दुग्धं पिबति द्रव्यं वा इत्याद्यप्रयोगात् वाकारघटितं यत्रो-

त्तरवाक्यं तत्र पूर्ववाक्यस्यापि उत्तरवाक्य प्रतिपाद्य द्रव्यकर्मक-
त्वादि व्यवच्छेद बोधकत्वमावश्यकं तद्बोधश्च लक्षणादिना कथं-
चिदुपपादनीयः एवं च व्रीहिभिर्यजेतेत्यादौ यवकरणकत्वाभाव-
बोध ध्रौव्यमित्युक्तावपि न निस्तारः एवं व्रीहियवयोर्यागं प्रतिकार-
णता न प्रामाणिकी इच्छा ह्यस्य यागस्येष्टसाधनताज्ञानादि घटित
सामग्रीत एव निर्वाहात् । अत्राहुः । वेदस्थलेऽविशिष्टान्वय परता सं-
भवेत दपरित्यागात् व्रीहिकरणकत्वाभावस्य विशेषणतयैव
यवकरणक यागधर्मिक स्वर्गसाधनत्वमाने न तादृशाभावस्य स्वर्गा-
दि फल प्रयोजकत्वासिद्धिः एवमुक्तातिप्रसंगवारणाय कल्पनीय-
व्युत्पत्त्या व्रीहिभिर्यजेतेत्यत्रापि यवकरणकत्वाभाव विशिष्टव्रीहि
यागस्य स्वर्गादि साधनत्वमानात्तस्यापि तादृश यागजन्य फलप्रयो-
जकतासिद्धिरिति नोभय करणक यागात्फलं । यदि चोत्तरवाक्ये
वाकारार्थ व्यवच्छेदस्यान्वयितावच्छेदक द्रव्यपानत्वाद्यवच्छे-
देनान्वयोपगमेन तद्रूपवाति दुग्धपाने दुग्धकर्मकत्व व्यवच्छेद-
बाधेनातिप्रसंगो बार्यते तदापि न क्षतिः प्रकृतेऽपि फलसाधन

यवकरणक यागत्वादिरूपान्वयितावच्छेदकावच्छेदेन व्रीहि
करणकत्वव्यवच्छेदबोधेन उभयकरणकयागे निष्फलत्वोपपत्तेः
व्रीहिकरणकफलजनकयागे यवकरणकत्वव्यवच्छेदस्यार्थ-
लभ्यत्वेऽपि व्रीहिभिर्यजेतेत्यस्य तत्परत्वमव्याहतमेवेति विधे-
यौ; परस्परन्वापि नि परस्परसंबंधव्यवच्छेदविधानरूपवैकल्पि-
कं विधानं तत्र निर्वहति यागस्य व्रीह्यादिककरणकत्वं च व्रीह्याद्यवय-
वारब्धपुरोडाशविषयकत्वरूपमेव तृतीयार्थः। अतएव व्रीहिरूपयागे
व्रीह्यादेरनन्यथासिद्धनियतपूर्ववर्तितारूपकारणता विरहेऽपि नानुप
पत्तिः; व्रीह्यकरणकयवकरणकयागत्वाद्यवच्छिन्नस्य फलनिष्ठावांतर
वैजात्यजन्यतावच्छेदकमिति फलस्य तद्रूपावच्छिन्नव्याप्यत्वेऽपि नक्षतिः
व्रीह्यकरणकयवकरणकत्वादिरूपकारणतावच्छेदकयोः परस्परं विशेष्य-
विशेषणभावे विनिगमनाविरहेऽपि न क्षतिः; अगत्या कार्यकारणभावा-
धिक्यस्यादोषत्वात्। केचित्तु। व्रीह्यकरणकत्वाद्यवच्छिन्नवैश्य
यवकरणकयागत्वादिनैव विजातीयफलजनकता उभयकरणक-
यागादपूर्वानुत्पत्त्यनुरोधेन च साधारणरूपावच्छिन्नमपूर्वं प्रत्यु-

मय करणक यागत्वेन प्रतिबंधकता वाच्या उभयकरणक यागानं-
तरं प्रत्येककरणकयाग कर्तृहिना पूर्वानुपपत्तेः पूर्वं उभयकरणक-
नाश यागात्। यवादिमात्र करणक यागेना पूर्वजननीये तादृश
यागस्य व्रीहि करणकत्वाद्यभावस्य प्रयोजकत्व मव्याहतमेवेति न
विशिष्ट यागस्य प्रयोजकत्व बाध इत्याहुः। उपधायकता संबंधेन
यवादि यागजन्यता संबंधेन व्रीह्यादे व्रीह्यादिजन्यता संबंधेन
व्रीह्यादेर्व्रीह्यादि जन्यत्वस्यैव वा साधारण रूपावच्छिन्न फले उभय-
त्वावच्छिन्नस्य वा प्रतिबंधकत्व इत्यन्ये भवयो र्विकल्पे परस्पर व्यव-
च्छेद बोधक वाकारापेक्षा न त्वाति रात्रे षोडशिनं गृह्णाति नातिरात्रे
षोडशिनं गृह्णातीत्यादौ ग्रहणाग्रहणादि विकल्पे तत्र वाकारं विनैव
परस्पर व्यवच्छेद रूपयोः ग्रहणाग्रहणयोः प्रतीतेः नच षोडशिग्रहणे
श्रुत्यनुरोधेन तदंग कातिरात्र जन्य सातिशय फलेन तज्जनक विजा-
तीयापूर्वं षोडशी ग्रहणस्यानन्यथासिद्धत्वेन हेतुत्वेपि तादृशानिश-
पहित फलस्य षोडशि ग्रहणानंगक यागादतिशय प्रयोजकाभाव
सहिता तदर्थ एवोपपत्ते; तज्जनक विजातीयापूर्वासिद्ध्या आतिरात्र-

जन्मापूर्वं षोडशी गृहणाभावो अन्यथा सिद्ध इति नातिरात्रे षोडशीनं गृह्णातीत्यत्र विध्यर्थबाध इति वाच्यं, तद्बाधानुरोधेनातिशयशून्य फल निष्ठवैजात्यस्यापि कल्पनीयत्वादिति। अनुकल्पस्थले प्रथमकल्पासामर्थ्यं सहकारि न तु प्रथमकल्पस्याभावः कुशाद्युपादानसंभवे काशादिमात्रमुपादायानुष्ठित कर्मणो निष्फलत्वात्, प्रथमकल्पे चनाय व्यवच्छेदार्थकोति विकल्पानुकल्पयोर्भेद इति। यत्तु विकल्पस्थले परस्परोत्कर्षाद्यकर्षभावानाक्रान्तफलजनकत्वमभ्युपगम्यते प्रथमकल्पानुकल्पस्थले परस्परोत्कर्षापकर्षभावाक्रान्तफलजनकत्वमभ्युपगम्यत इति विकल्पानुकल्पयोर्भेद इति नव्यैरुक्तं तदसत्। प्रथमकल्पानुकल्पस्थले सोमेन यजेत सोमाभावे पूतिकान्याभिषुणुयादित्यादौ परस्परोत्कर्षापकर्षभावाक्रान्तफलजनकत्वस्य सर्वमीमांसकैरनभ्युपगमादिति दिक्। अधिकं विधिनिरूपणप्रकरणादवनुसंधेयम्। सिद्धार्थबोधकः शब्दार्थवादः, स च वायुर्वै क्षेपिष्ठा देवतेत्यादिस्तुत्यर्थवाद सोऽरोदीदित्यादिनिन्दार्थवादादिरूपः। अत्र मीमांसका पदमात्रस्य कार्यान्वित एव शक्ततयार्थवादानां प्रामा-

ष्यासंभव: तत्र कार्यता वाचक पदाभावात्। तथाहि लोके घटमानये-

ति वाक्य श्रवणानंतरं कस्यचिद्वृद्धस्य प्रवृत्तिमुपलभमानो बाल: प्रवृ-

त्ते: कार्यताज्ञान जन्यत्व नियमेन तज्ज्ञान जन्यत्वं गृहीत्वा उपस्थित

पदानां कार्यत्वान्वित ज्ञान जनकत्वं प्रथमं गृह्णाति तदनंतरं अपरस्य

पदपदार्थे प्रवृत्तेरदर्शनादावापोद्वापेन कार्यतान्वितं पदानयन तद-

न्वितं यत्कर्मत्वं तदन्वित घटज्ञानजनकत्वं घटपदे गृह्णाति। एवं

तादृश कर्मत्व जनकत्वं अम् पदस्यैत्येवं क्रमेण शक्तिग्रह इति

तन्मते शाब्द सामान्यं प्रति कार्यतावाचक पदज्ञानस्य हेतुत्वं स्वीकरणी-

यम् अतएव कृति साध्यत्व शक्तिकलिङ् पद घटित घटमानयेत्यादि

वाक्यानामेव शाब्द बोध जनकत्वं प्रमाण्यं च न घटोस्तीति वाक्यानां

तेषां कार्यता वाचक पदाघटितत्वात्। ननु कार्यतावाचक पदज्ञानस्य

कार्यतावच्छेदकं यदि शाब्दत्वं तदा घटमानय घटोस्तीति वाक्यात्।

समूहालंबन तादृशबोधापत्ति: यदि कार्यतान्वित शाब्दत्व तदा व्यर्थ

विशेषणत्वापत्या व्याप्ति विरहेण तद्धर्मावच्छिन्न निरूपित कारणत्वा

संभवात् तादृश वाक्यात् समूहालंबन शाब्द बोधापत्तिश्चेति चेन्न।

कार्यतान्वितानयनान्वितकर्मत्वान्वित घटविषयताशालि शाब्दत्वावच्छिन्नं प्रति

घटमानयेति समभिव्याहारज्ञानमपि हेतुरेवं क्रमेण विधिसमभिव्याहारज्ञानस्य

हेतुत्वे घटोस्तीति वाक्यस्य तादृशशाब्दबोधं प्रति हेतुत्वाकल्पनेनापादका-

भावः। नन्वेते घटोस्तीत्यादिवाक्यस्य केवलघटमित्यादिपदज्ञानस्य च

तत्तच्छाब्दबोधत्वावच्छिन्नं प्रतिकार्यकारणभावांतर कल्पने गौरवं घटमानये-

त्यादिस्थलीय कार्यकारणभावकल्पनमुभय ~~मते समानं लक्षणाज्ञानशू-~~

~~न्य~~ सिद्धमेवं घटोस्तीति वाक्यानां लक्षणया कार्यत्वान्वित तत्तच्छाब्द-

हेतुत्वाभ्युपगमे तु तत्स्थलीय कार्यकारणभावकल्पनमुभयमते समानं

लक्षणाज्ञान शून्यकाले तत्तत्पदजन्योपस्थितिकालीनासंसर्गाग्रहव-

शाद्विशिष्टव्यवहारः। वस्तुतस्तु। तादृशलक्षणायां मानाभावः। न च लक्षणा

मात्रोच्छेदापत्तिरिति वाच्यम्। घटमानयेति वाक्यानां कार्यत्वान्वितान-

यनान्वितकर्मत्वान्वित घटविषयकशाब्दनिर्वाहाय लक्षणास्वीकारात्।

न च बालकेन यदि कार्यतान्वित घटशाब्दं प्रति घटमानयेति वाक्यस्य हेतुता

गृहीता तदा फलानुरोधात् घटोस्तीति वाक्यस्य यदा कदाचित् कारणताग्र-

हेऽपि पूर्वकल्पनाया अविरोधात् कथं सिद्धार्थक वाक्यस्य न शाब्दहेतुत्व

मिति वाच्यं। यत्र यदा कार्यान्वित घट शाब्द प्रति हेतुता बालकेन न गृहीता तदैव तन्निर्वाहाय शाब्दत्वावच्छिन्नं प्रति विषयाभिजित कार्यत्वोपस्थापक पद-ज्ञानस्यापि हेतुत्वं गृहीते पश्चादतिप्रसंगवारणाय विधिसमभिव्याहृतवाक्य-स्य तत्तदर्थविषयक शाब्दबोधं प्रति हेतुत्वकल्पने पूर्वं गृहीत सामान्यकरणता विरोधेन तद्विरोधि सिद्धार्थकवाक्यस्य हेतुत्वं न स्वीक्रीयते, न च कार्यत्वो-पस्थापक पदज्ञानस्य हेतुत्व कल्पनेकार्याभाव अस्तीति वाक्यादपि शाब्दबोधा-पत्तिरिति वाच्यम्, कार्यपदभिन्न कार्यत्वोपस्थापक पदज्ञानत्वेन हेतुत्व कल्प-नात्। किंच विशेषसामग्री विरहेण तत्र शाब्दबोधापत्त्यभाव: वस्तुतस्तु। घट: कृतिसाध्य: इत्यादिवत् अत्रापि इष्टापत्ति: न च तदा सामान्यकारणता-यां मानाभाव इति वाच्यम्, यद्विशेषयोरिति न्यायात् तादृशकारणत्व क-ल्पनात्। अथ यदि कार्यत्वान्वितघट ज्ञाने शक्तिस्तदा तादृशशक्तिज्ञानात् घट इति स्मरणानुपपत्त्या शाब्दबोधे कार्यत्वान्वितस्य प्रकारतापत्तिरिति चेन्नैवम्। द्विविधा हि पदशक्ति: आनुभविकी स्मार्तिका च कार्यत्वान्वितघट विषयक शाब्दनिरूपित बोध निरूपिता पदनिष्ठा शक्तिरनुभाविकी घटत्व निरूपिता पदनिष्ठा शक्ति: स्मार्तिका, आनुभाविकी तु स्वरूपसत्यपी क्षेता स्मार्तिकाया-

स्तु ज्ञानं तथा च तादृशस्मारकशक्तिज्ञानादेव घट इति स्मरणोपपत्तिरिति

संप्रदाय: । वस्तुतस्तु कार्यतान्वितघट विषयकशाब्दनिरूपिताया पदनिष्ठाया

नुभावकशक्तेरेव घटत्वीयत्वेन ज्ञानं कारणं तथा च यत्संबंधित्वेन

ज्ञानं तस्यैव स्मरणात् प्रकृते घटत्वसंबंधि तादृशज्ञानात् घटत्वस्मृत्या

घटस्मृतिर्लभ्यत इति जातिनिरूपितस्मारकशक्ते: कल्पने मानाभावात्

न शक्तिद्वयमिति सारं अत एव केवल घटोस्तीति क वाक्यस्यापि घट-

त्वादि नास्मारकता । मानं स्वरूपसंबंधेन कार्यत्वविशिष्टं पदानयननं

निरूपकतासंबंधेन तदन्वितं यत्कर्मत्वं आधेयत्वसंबंधेन तदन्वितो य

घटादिस्तच्छाब्दत्वेन कार्यता स्वीकारेण च घटमानयेत्यादौ तत्तद संसर्गक

शाब्दोदय: न चावांतरवाक्यार्थबोधस्य महावाक्यार्थविशिष्टवैशि-

ष्ट्य बोध हेतुत्वेन तदनुरोधेन घटकर्मत्वबोधस्वीकारे कार्यत्वाविष-

यक शाब्द स्वीकारापत्तिरिति वाच्यम् । व्युत्क्रमेण कार्यत्वान्वितानयन-

मित्यादि क्रमेणावांतरवाक्यार्थबोधस्य कार्यत्वविषयकस्य स्वीकारात् ।

न च नैयायिकमते घटपदजन्योपस्थिते: घटत्वप्रकारके घटशाब्दत्वं

भवन्मते कार्यत्वान्वितार्थान्वित घटशाब्दत्वं कार्यतावच्छेदकमिति गौ-

स्वमिति वाच्यं । मन्मतेऽपि घटशब्दत्वमेवावच्छेदकं किंतु घट इति
पदं आनयपदेन सहान्वयबोधतात्पर्यकमिति ज्ञानस्य सहकारेण ता-
दृशोपाध्यिते हेतुत्वस्वीकारेण लाघवसंभवात् । एवं योग्यताज्ञानोप-
रापि एतज्ज्ञानसहकारेण विशिष्टविषयताशालिशाब्दं प्रति हेतुत्वं के-
वलं घटमिति शाब्दबोधे योग्यताज्ञानादेः शाब्दसामग्र्याः हेतुत्वाक-
ल्पनेन चापरं लाघवं एवं यत्र चैत्रपुत्रस्ते जात इति वाक्यस्य पुत्रजन्म
ज्ञानजनकता गृहीता तत्रापि पूर्वकल्पना विरोधेन कार्यत्ववाचकपद
सहकारेण जनकता गृह्यते लाघवादिप्रतिसंधानादिवशात् एवं विधेय
वाक्यता यत्रार्थवादस्यापि शाब्दबोधजनकत्वं विधेयैकवाक्यतातत्त्वज्ञा-
नसहकारिवशात् । न च कार्यत्ववाचकपदलभ्यत्वप्रतिसंधानोत्तरं पूर्व
क्लृप्तकार्यतान्वितानयनान्वितकार्यत्वान्वितघटज्ञानजनकत्वज्ञानस्य प्रा-
माण्यग्रहस्वीकारात् अन्वितज्ञानजनकत्वमेव कल्प्यते तथा च यातं
सिद्धार्थवाक्यस्यापि प्रामाण्यमिति वाच्यम्, भ्रमत्वकल्पने गौरवात् । न चा
श्वमेधादौ यत्नास्वर्गत्वसामानाधिकरण्येन तान्निरूपितजनकता गृह्यते नत्व-
वच्छेदकत्वांशेऽपि तथा कार्यत्वान्वितत्वघटे जनकता गृह्यते नत्ववच्छे-

दकत्वांशोपि तथा च कार्यत्व वाचकपदसमभिव्याहारेण तादृशस्य

पक्षेणं लभ्यत इति न सिद्धार्थ वाक्यस्याप्रामाण्यमिति वाच्यं, न तदवच्छि-

न्न जनकत्वस्यैव वाक्ये ग्रहात् न च तदा कार्यान्वित तादृश घट ज्ञानत्वाव-

च्छिन्न जनकताग्रहात्तदनुरोधेन घटांतर्भावेनापि सर्वत्र बोधकतापत्तिः

अन्यलभ्यत्व प्रति संधानात् यदि घटांश त्यागस्तदा कार्यत्वांशोपीति

वाच्यम् । प्रथमं घटांतर्भावेनैव विशेष जनकता ग्रहेण सामान्य जन-

कतापाअग्रहात् घटांतर्भावेन सर्वत्र बोधकतापत्तेरभावादिति भट्टं-

ति, अन्नैय्यायिकाः । घटोस्तीति वाक्य श्रवणानंतरं शाब्दबोधो-

दयेन तदनंतरं शाब्दयामीत्यनुव्यवसायेन च तादृश वाक्यस्य शाब्द

बोधजनकत्वेन प्रमाणत्वात्, प्राक्क्लृप्त शाब्द सामान्यं प्रति कार्यत्व

वाचक पद समभिव्याहृत ज्ञान कारणत्व ग्रहस्य भ्रमत्व कल्पनात् अन्यथा

घट मानयेत्यादि वाक्य श्रवणात् तज्जन्योपस्थिति जन्य मानस बोध-

नैव व्यवहारोपपत्तौ शब्दमात्रस्या प्रमाणतापत्तेः एवं विधि शेषीभूतवा-

क्यस्य प्रामाण्य निर्वाहाय विध्येकवाक्यत्व ज्ञानस्य ज्ञानत्व हेतुत्वकल्प-

नामीति न संभवति तं विनापि स्वर्गपद शक्ति ग्राहकवाक्यस्य प्रमाण-

त्वादिति । अयतदा इति रान्वित एव शक्तिरस्तु शाब्दबोधविषयता च

वृत्ति विषयता व्याप्येति नियमात् । अन्यथा अन्वयस्य शाब्दबोधविष-

यता न स्यात् न चान्वितघटत्वादिना शक्यत्वेऽन्वित घटस्य घटान्वित

कर्मत्वस्य च भाने घटमानयेति शब्दाद्वाक्यार्थद्वयबोधः स्यान्नतु वि-

शिष्टैकार्थ बोध इति वाच्यं तथा सति घटान्वये घटपदस्य शक्तिः क-

र्मत्वान्वये वाम पदस्य शक्तिरस्त्वित्येवं क्रमेणवाक्यार्थैक्य संभवात्

न च यत्र नीलघट इत्यादौ घटस्य विशेष्यतया मानं तत्र न कथं घटान्व-

यस्य विशेष्यतया मानामिति वाच्यम् । घटेन्वये च खण्डशक्तिस्वीकारेणे-

मयोपपत्तेः अन्वयस्यानाचीतेतर पदार्थ एवान्वयेन तत्र तादृशेतर पदार्था-

भावेनतस्यानन्वयात् अतएव घटमानयेत्यादावानयनान्वयस्य विशेष्य-

तया मानापत्तिरपि निरस्ता । वस्तुतस्तु । यथा त्वादि शब्दे बुद्धिस्थत्वेन

शक्तिः तद्वक्ता विशेषाद्विशेष रूपेण बोधस्तथा पदानामितरान्वितत्वे-

नान्वितत्वेन वा सामान्य रूपेण शक्तिर्घटकर्मक नयनादित्वायस्तु परस्प-

राकांक्षादि वशादित्येव लाघवमिति चेन्न । अन्वय सामान्यस्य शक्यत्वेपि

अन्वय विशेष मानार्थं आकांक्षाज्ञानादेर्नियामकत्व कल्पनावश्यकत्वेन

तत्र स्वतंत्र शक्त्य कल्पनात् । शाब्द विषयताया वृत्तिविषयता व्याप्य-
त्वानंगीकारात् पदार्थद्वय संसर्गभानं चाकांक्षावशात् पदार्थतावच्छेदक
संसर्गभानं तु शक्तिबलात् अन्यथान्वये शक्तिस्वीकारे तत्संसर्गस्यापि भा-
ने भासमान वैशिष्ट्य प्रतियोगितः प्रकारतापत्तेः । न च तदनुभव सिद्धं अन्य
लभ्यत्वे शक्त्यकल्पनात् अतएवान्वयस्य सांसर्गिक विषयता शालि
शाब्द बोधे शक्ति ज्ञानस्य सहकारीत्व कल्पनमेव तादृशान्वयस्य प्रकारत्व-
वारकमिति परास्तं । आकांक्षावशादेव तादृश सांसर्गिक विषयताशालि
शाब्दबोधे निर्वाहात्तदर्थमन्वये शक्ति कल्पना नौचित्यात् अतएव शा-
ब्दबोध विषयताया वृत्ती विषयता व्याप्यत्वाभ्युपगमेऽन्वयांशस्य त-
द्व्याप्यतावच्छेदक विषयाभानं युगपद्वृत्तिद्वय विरोधानभ्युपगमात् सर्व
पदस्य लाक्षणिकत्वेऽपि न बोधानुपपत्तिः लाक्षणिकपदस्यानुभाव-
कत्व व्युत्पत्तेरप्यकल्पनात् । इति परास्तम् । आकांक्षाबललभ्ये
लक्षणाया अप्यकल्पनात्, अतएव धूमोऽस्तीति वाक्ये वह्निपरत्वस्या-
नुमानेन निर्वाहात्तदर्थं वह्नौ धूमपदस्य वृत्ति कल्पना । किं चैवं द्वार
पदस्य शक्तिविलोपापत्तिः लक्षणा निर्वाहार्थं शक्तिकल्पने घटाति-

रिक्तोपि शक्तिः स्यात् मुख्य प्रयोग विरहस्योभयत्र तुल्यत्वात् अतएव पदार्थ ज्ञाने पदानां शक्तिः शक्याभूत ज्ञान विषयत्व लक्षण शक्यत्वं अर्थे इत्यपि निरस्तं तस्या अर्थस्मरणाजनकत्वात् । न च ज्ञान शक्तिरेव स्वीकार्या शक्तिरर्थे इति मते न दोषः ज्ञान शक्ति ज्ञानस्य घटत्वस्य स्मृति कार्यतावच्छेदकताभ्युपगमेन तादृश फलोपपत्तेरिति वाच्यं, ज्ञाने शक्ति स्वीकारे मानाभावादर्थ शक्त्यैव तादृश फलोपपत्तेरिति । इत्थं च कार्यान्वितान्विते वा न शक्तिः किंतु पदार्थमात्र इति शक्तिमत्पदे ज्ञानं करणं पदार्थ स्मृतिर्व्यापारः शाब्द बोधस्तु फलमिति । न्याय सिद्धान्तः अत्र मद्राः अर्थस्यैव करणत्वमस्तु किं पदस्य करणत्व कल्पनेन, न चार्थ स्यातीतत्वानागतत्वात् । न तस्य शाब्द कारणत्वं स्मृतेर्विषयाजन्यत्वेन तस्या व्यापारत्वाभावादिति वाच्यं, तथा पदार्थ स्मृतेः कारणत्वमस्तु तद्वशेन सर्वोपपत्तेरिति अतएव । चिंतो पाख्येत उपनीत ज्ञानानंतरं कार्य निर्वाहस्तथा च महनये सर्व पदस्थले सर्वार्थो पाख्येति कालेच शाब्दबोधः शाब्दत्वं द्वयं एकं सर्व पदजन्य पदार्थोपाख्येतेर्जन्यतावच्छेदकं अपरं पदाजन्य पदार्थोपाख्येतिजन्यतावच्छेदकं अतएव

यत्किंचित्पदासत्त्वे परपदाध्याहारेणैव शाब्दबोधः न च यत्र पदज-
न्योपस्थितिः पदाजन्योपस्थितिश्च तत्रोभयजातीय शाब्दापत्तिरिति
वाच्यं, पदजन्योपस्थिति घटितशाब्द सामग्री प्रतिबंधकत्वस्यैवैकदा
शाब्दद्वय जातीयानुपपादात्, न च विषयाभिन्नत्व तादृश शाब्दत्वस्य प्रति
बध्यतावच्छेदकत्वे महागौरवमिति वाच्यम् । पदजन्य सर्वोपस्थिति
घटितसामग्र्याः प्रतिबध्यतावच्छेदकत्वस्य तादृश शाब्दत्वे चोपपत्ते न च
घटमानयेति पदजन्योपस्थिति सत्त्वे पदमानयेति पदाजन्य तादृश सर्वोपस्थि
तिसत्त्वे परस्पर विरोधेन शाब्दमात्रानुत्पादरनुभव विरोध इति वाच्यं । पदजन्यो
पस्थिति घटितशाब्दसामग्र्याः प्रतिबंधकत्वे लाघवेनास्तस्यैवोपगमात् भव-
न्मते पदाजन्य सर्वोपस्थिति घटित सामग्र्याः प्रतिबंधकत्वे पदजन्यत्वाभावे-
त्यत्राभावांशानिवेशाधिक्येन गौरवात्, न्यायनयोपेतदर्थस्य मानसबोधा-
स्वीकारेण पदजन्योपस्थिति घटितसामग्र्यास्तं प्रति प्रतिबंधकत्व स्वीकारात्
न च यत्र शक्तिज्ञान घटित सामग्री नास्ति केवल पदाजन्योपस्थितिः तत्रतद-
र्थस्य मानसबोधवारणाय प्रतिबंधकत्वस्यावश्यकत्वेन तत्रैव पदाजन्योप-
स्थिति घटितसामग्र्यास्तज्जातीयान्यं प्रति प्रतिबंधकताभ्युपगमेऽक्लृप्त-

नैवोपपत्तेः न प्रतिबध्य प्रतिबंधकभावांतरकल्पनमिति वाच्यम्, तत्र मानसे-
च्छाया उत्तेजकत्वेन तादृशेच्छाकाले शाब्दोत्पत्ति वारणाय स्वातंत्र्येण प्रति-
बंधकताया आवश्यकत्वादिति तन्न पदाजन्य सर्वपदार्थोपस्थितिकाले
मानसबोधस्वीकारेण तादृश व्यवहारोपपत्तौ तस्य शाब्दत्वे मानाभावात्,
तस्मात् पदज्ञानं करणं पदार्थोपस्थितिर्व्यापार इत्यलं प्रसंगागतेन तस्मात्
कार्यान्वितशक्ति विरहात् सिद्धार्थवादानां प्रामाण्यं अतएव यत्र दुःखेन
संभिन्नं न च ग्रस्तमनंतरं अभिलाषोपनीतं च तत् सुखं स्वपदास्पदमित्य-
र्थवादात्सुख विशेषे स्वर्गपद शक्तिग्रहो व्युत्पन्नः नन्वत्र दुःखासंभिन्नत्वं
यदि दुःखानवच्छेदिकावच्छिन्नत्वं तदा राज चक्रवर्ति सुखे तादृश खंडशरी-
रावच्छिन्नेति प्रसक्तं। न च दुःखावच्छेदकवृत्तिजात्यनाक्रान्तावच्छिन्नत्वमर्थ-
स्तु तत्र तादृश चैत्रत्वादि जाति सत्वान्नोक्तिप्रसंग इति वाच्यं। तथा सति स्वर्गा-
त्मक सुखावच्छेदकशरीरेऽपि तादृश सत्व द्रव्यत्वादि जातिसत्वेनासंभव
प्रसंगादिति चेन्न दुःखावच्छेदकवृत्त्येककालातद्व्यावृत्तिजात्यनाक्रान्ता-
वच्छिन्न सुखत्वस्यैव तदर्थतया तस्यैव स्वर्गपदशक्यतावच्छेदकत्वात् सत्व-
गुणत्वादेकैककालीन द्रव्यवृत्तित्वाच्चैत्रत्वादेश्चैकदाऽभय शरीरावृत्ति-

त्वाच्च नोक्तदोषः। नव्यास्तु दुःखावच्छेदकावृत्तिजात्यावच्छि-

न्नत्वं तदर्थः स्वर्गावच्छेदकवृत्तिचैत्रत्वादिजातेर्दुःखावच्छेदकावृत्ति-

त्वात्तत्संग्रहः न च तत्रापि पातभयजन्यदुःखसत्वान्न दुःखावच्छेदका-

वृत्तित्वं तादृशजातेरिति वाच्यं स्वर्गोऽपि पातभीतस्य क्षयिष्णोर्नैव निर्वृति

रित्यादिश्रुतेः स्वर्गस्य हेयता प्रतिपादकत्वेन तादृशार्थे तस्य तात्पर्याभावात्।

पातभयाजन्यत्वं वा दुःखे विशेषणं देयम् मित्याहुः अथ तादृशस्वर्गिश-

रीरनाशानंतरं मुक्त्यनुपपत्तिः तत्र दुःखासत्वेन तन्नाशाविरहादिति चेन्न

मुक्तिं प्रति ब्राह्मणशरीरादेर्हेतुत्वेन तत्र तदभावादेव मुक्तिविरहात् स्वर्गि-

शरीरे ब्राह्मणत्वप्रयोजकादृष्टाभावेन तच्छरीरे ब्राह्मणत्वाभावात्। यदि च

श्रवणादिजन्यमुक्तौ ब्राह्मणशरीरापेक्षा न तु प्रकारांतरेण मुक्तौ काशी-

मरणादिजन्यायां तदपेक्षेति विभाव्यते तथापि न क्षतिः तादृशशरीर-

नाशानंतरं दुःखावच्छेदकशरीरोत्पत्तिमुपेत्य चरमदुःखोत्पत्त्यनंगीका-

रेण तादृशदुःखध्वंसस्यैव मुक्तित्वसंभवात्। न च ध्वस्तमनंतरमिति न

चेतदपि राजचक्रवर्तिसुखक्रमिकखंडशरीरावच्छिन्नेति प्रसक्तमिति वा-

च्यम् क्षणिकद्वयात्मककालोपाध्यवच्छेदेन सुखाभावावच्छेदका

वृत्ति जात्याद्य पावच्छिन्नसुखत्वस्य तदर्थत्वात् अभिलाषोपनीतामिति

न चात्राभिलाषविषय सुखत्वं जन्य खंडशरीरावच्छिन्ने राज चक्रवर्ति सुखे-

अति प्रसक्तामिति वाच्यम्। तत्तद्विषयसंबंध गोचरेच्छा व्यवहितोत्तरकाला-

वच्छेदेन तत्तद्विषय संबंधत्वावच्छिन्नाभावावच्छेदकावृत्ति जात्याद्या-

वच्छिन्न सुखत्वस्य तदर्थकत्वात्। अत्र च प्रत्येकमेव स्वर्गपद शक्यता

वच्छेदकं एवद्धर्मत्रयं तात्पर्यविशेषादेव कदाचित्कस्यापि प्रानमिति

तस्य न नानार्थत्वं। अत्र केचित् इंद्रादीनां सुखविच्छेदस्य बहुशः

श्रवणात् न च शस्तित्यादि प्रतिपाद्यस्य न स्वर्गपद शक्यतावच्छेदकत्वं।

स्वर्ग सुखस्यापि विषयजन्यत्वाच्च न निरुक्ताभिलाषोपनीतत्वस्यापि,

अविलंबेन विषय प्राप्तिर्वहि तेषामभिलाषा मानात्। अविलंबनस्च

क्रियाद्यनपेक्षत्वामिति तस्माद्यन दुःखेत्यादि प्रतिपाद्यस्यापि धर्मस्यैव

स्वर्गपदशक्यतावच्छेदकत्वमित्याहुस्तदसत् देवानां सुखविच्छेद-

श्रवणस्य रामादि दुःखश्रवणवत् संसार निंदा परत्वात्। स्वर्ग सुखस्य

विषयजन्यत्वे मानाभावाच्च। न च तथापि लाघवादग्निष्टोमादि जन्यता

वच्छेदकं स्वर्गनिष्ठ तत्तद्वैजात्यमेव स्वर्गपद शक्यतावच्छेदकमस्तु

उक्त धर्मत्रयं तत्प्रयोजकमेवेति वाच्यम् । तस्याननुगमेन शक्यतावच्छे-
दकत्वासंभवात् । ननु तस्याननुगमेन शक्यतावच्छेदकत्वासंभवेऽप्यग्नि-
ष्टोमगंगास्नानादिरूपविभिन्नजातीयकारणजन्यसकल ~~सुख~~ स्वर्गनिष्ठ-
स्वर्गत्वरूपविलक्षणजातिरेव स्वर्गपदशक्यतावच्छेदिकाऽस्तु न च स्वर्ग-
त्वजातौ मानाभावः तत्तद्वैजात्यस्यैवाग्निष्टोमादिजन्यतावच्छेदकत्वा-
वश्यकत्वेन तां विना कार्यकारणभावाद्य निर्वाहविरहादिति वाच्यं । अग्नि-
ष्टोमादीनां विशेषरूपेणया कारणता तत्प्रति योगिककार्यतायास्तत्तदवां-
तरवैजात्येनावच्छिन्नत्वेऽपि विहितकर्मत्वेन या सामान्यकारणता तत्प्रति-
योगिककार्यतावच्छेदकतया व्यापकस्वर्गत्वजातेरवश्यकल्पनीयत्वात् ।
न च कार्यतावच्छेदकाननुगमस्यादोषतया तत्तदवांतरवैजात्यामेव
तादृशकार्यताया अप्यवच्छेदकत्वमास्तामिति वाच्यम् । यद्विशेषयो-
रिति न्यायेन सामान्यरूपेणकारणताया अप्यावश्यकत्वात् कार्य-
कारणभाववैरूप्यलाघवेनापि सकलस्वर्गसाधारणैककार्यताव-
च्छेदकस्य जातिरूपस्यासिद्धेर्निष्प्रत्यूहत्वाच्चेति चेन्मैवं । सकल
स्वर्गापापसाधारणस्य विहितकर्मत्वस्य दुर्वचतया तेन रूपेण-

काम्यत्वस्याप्रामाणिकत्वात् प्रामाणिकत्वेऽपि सुखत्वस्यैवं तज्ज-
न्यतावच्छेदकत्वात् लौकिकायकृष्ट सुखस्यापि विना पुण्यमनुत्प-
त्त्या व्यभिचारानवकाशादिति दिक्। एवमिन्द्रमुपासीतेत्यादावपि
इन्द्रपदस्य लोके पृथ्वीन्द्रादावपि प्रयोगादिंद्र पदार्थानिश्चयेन
इन्द्रः सहस्राक्ष इत्यर्थवाद लौकिके सहस्राक्षादाविंद्रादि पद
शक्तिग्रहः अतएव दैवताचैतन्यासिद्धिरपि। अत्र मीमांसकाः। देवता-
चैतन्ये मानाभावः तथाहि। देवतावाचकेंद्रादि पदानां इन्द्राय स्वाहे-
त्यादि मंत्रात्मकचेतन एव शक्तिः तस्यैव देवतात्वात्। न तु सहस्राक्षे
इंद्रः सहस्राक्ष इत्यर्थवादस्या प्रवर्तकत्वेना प्रमाणत्वात्। अपि शि-
वाय गां दद्यादित्यादौ त्यागजन्य फल भागित्वरूप देवता निष्ठ संप्रदान-
त्वस्य श्रुतेः वरदातृत्व श्रुतेश्चाचेतन मंत्रस्य रूपं शिवादि पद शक्य-
त्वं तस्याचेतन रूपतया तादृश संप्रदानत्व विरहात्। अपि च मंत्र-
स्य शिवादि पद शक्यत्वे तत्तन्मंत्रानुपूर्वी विशेषणमेव शक्यताव-
च्छेदकत्वेनैक शक्यतावच्छेदकाभावात् शिवादि सहस्रनाम्नां
पर्यायत्व व्याघातापत्तिः एवं वाजपेय यागस्येंद्रपदफलकत्वात्

तद्विरोधापत्तिश्चेति वेदस्त्वेतावतापि इन्द्रादिपदानां सहस्राक्षत्वाद्-
तान्निर्देश्यत्वं च वेदबोधितं चतुर्थ्यंत तयोच्चार्यत्वं । न च कपा-
देशन्याइन्द्रादिपदस्य चतुर्थ्यंत तयोच्चार्यत्वं बोध्यत इति वाच्यं,
ऐन्द्रं दध्यमावास्यायां आग्नेयं हव्यं निर्वपेदित्यादौ देवता-
र्थे विहितेन तद्धितेन च चतुर्थ्यंततयोच्चार्यस्वरूप देवतात्वस्यैन्द्रादि-
पदेबोधनात् । तत्रैन्द्रादिपदस्य स्वपरतया चतुर्थ्यंतयोच्चार्यैन्द्र पद
करणकाभिन्नं दधीत्यन्वय बोधात् अत एवेन्द्रायेत्यादिपदमे-
व देवता न तु शक्रायेत्यादिपदं शक्रपदं च चतुर्थ्यंत तयोच्चार्यत्वस्य वेद
बोधितत्वात् । न चेन्द्राय स्वाहेति स्वाहांतसमुदायस्यैव मंत्रत्वेन तस्य
कथं देवतात्वं च चतुर्थ्यंततयोच्चार्य न तादृश मंत्रस्य वेदेनाबोधना-
दिति वाच्यं । स्वाहादेस्त्यागमात्र बोधकत्वेन देवतानंतर्गतत्वात्
न च चतुर्थ्यन्ततयोच्चार्यत्वमात्रं न देवतात्वमपि तु वेदबोधितत्व
विशिष्टं तच्च तादृशवेदेन बोधयितुम न शक्यत्वे ते एवं वेदेन बोधने
तादृशबोधितत्व ज्ञानात्तद्घटित देवतत्वं च वेदेन ग्राह्यं वेदे न देव-
तात्व ग्रहे वेद बोधितत्वं ग्राह्यमित्यन्योन्याश्रयत्व प्रकारांतरेणैतद्ग्रह

तत्प्रश्नमूलकत्वात्। पूर्वपूर्ववेदजज्ञानमूलकोत्तरोत्तरतादृशज्ञान निर्वाहेऽपि प्रथमतस्तादृशवेदजन्यशाब्दबोधे तदसंभवादिति वाच्यं, विशेषमात्रस्यैव तथात्वात्। तथाच देशनादिशिता या चतुर्थ्यंतता तद्विशिष्टपदत्वमेव देवतात्वं घटायेत्यादि चतुर्थ्यंतता न वेदबोधिते तन्निरासः केवलेन्द्रपदस्य चतुर्थ्यंताभावादेवभ्युदासः ऐन्द्रदधीत्यादौ तद्धितेनापि चतुर्थ्यंतत्वं बोध्यते चतुर्थ्यंतेन्द्रपदकरणाभिन्नं दधीतेवान्वय बाधात्। नचोभयत्रैव श्रुतिः स्वाहेति प्रथमांत श्रुतिपदे देवतात्वाभाव प्रसंग इति वाच्यम्। चतुर्थीपदेन चतुर्थ्यर्थकस्योक्तत्वात्। तत्र चतुर्थी निवेशेन प्रथमाया एव तत्स्थलाभिषिक्ततया चतुर्थ्यां एव तस्यां अप्युद्देश्यतार्थकत्वात् वैज्ञानिकं वा चतुर्थ्यंतत्वं निवेश्यं प्रकृतेऽपि चतुर्थ्यं तत्वज्ञानात्। अत एव लुप्तचतुर्थीकेऽपि भूः स्वाहेत्यादौ नानुपपत्तिरिति न चाचेतनस्यैव देवतात्वे इन्द्रा देवतेत्य भेदान्वयानुपपत्तिरिति वाच्यम्। इन्द्रपदस्येन्द्रापेतिपदपरत्वादिति संप्रदायः। वस्तुतस्तु चेतनस्य देवतात्वमतेऽपि प्रतिपाद्यतासंबंधेन इन्द्राय स्वाहेत्यादि मंत्रविशिष्टस्यैव देवतात्वमवश्यं स्वीकरणीयम् अन्यथा पर्याया-

तेनापि त्यागापत्तेः तथा च विनिगमनाविरहात् प्रतिपाद्यतासंबं-
धेन मंत्रविशिष्टोऽर्थः प्रतिपादकतात्वसंबन्धं संबंधेनार्थविशिष्टो
मंत्रो वेत्युभयमेव देवता केवलस्यार्थस्य देवतात्वे पर्यायांतरे-
णापि त्याग प्रसंगात् । केवलपदस्य तत्वे लक्षणादिना अर्थान्तर-
बोधक तादृश पदस्य देवतात्व प्रसंगात् तत्रा धेव वेदबोधिताया
चतुर्थ्यंततातद्विशिष्ट पद प्रतिपाद्यत्वमेव देवतात्वं अंत्ये च
तादृश चतुर्थ्यंतता विशिष्टत्वमेव न च केतन वेदेन तादृशचा-
तुर्थ्यं तत्तो बोध्यत इति वाच्यम् । ऐंद्र दधीत्यनेनैवत द्बोधनात्
तथाहि पदविशेष्यार्थस्य देवतात्व पक्षे इंद्रपदस्येन्द्र एवार्थः
तद्धित प्रत्ययस्य च चतुर्थ्यंत पदप्रतिपाद्यत्व विशिष्टः तथा चैन्द्रा-
भिन्न चतुर्थ्यंतपद प्रतिपाद्यक पदांगकत्यागकर्माभिन्नं दधीत्य-
न्वयबोधः अर्थविशिष्ट पदस्य देवतात्वकल्पे च तद्धित प्रत्याय-
स्यच चतुर्थ्यंतेंद्रादिपदमेवार्थः तथा च प्रतिपादकता संबंध-
नेंद्र विशिष्ट चतुर्थ्यंत पदांगकत्याग कर्माभिन्नं दधीत्यन्वयबोधः
इंद्र पदसमभिव्याहृत तद्धितपदेन च पदत्वरूपेणेंद्रायेत्यादि पद-

मेव बोध्यते व्युत्पत्तेरिति नानुपपत्तिः इत्थं च पक्षद्वये पर्यायांत-
रेण न त्यागोपपत्त्या दोषस्याप्येवं तद्धितार्थान्वयः चतुर्थ्यंतत्वे-
न वा यत्पदं बोध्यते तस्यैव त्याग इति नियमात्। न च वेदबोधित
चतुर्थ्यंतपदस्य देवतात्वरूपत्वे इंद्रस्य देवतात्वाभेदान्वयबोधो
न स्यादिति वाच्यम्। वेदबोधितचतुर्थ्यंत
तावत्पदप्रतिपाद्यत्वरूपदेवतात्वस्यैव देवतापदशक्यतावच्छे-
दकत्वात्। तथा चैतत्कर्मकत्यागांगीभूतचतुर्थ्यंतपदप्रतिपा-
द्याभिन्न इंद्र इत्यन्वयबोधः व्युत्पत्तिवैचित्र्यानुरोधात्। व्युत्प-
त्तिवैचित्र्याद्देवतापदार्थैकदेशे चतुर्थ्यंतपदेऽपि षष्ठ्यर्था-
न्वयस्वीकारादित्याहुः अत्र नैयायिकाः अचेतनमंत्रादीनां
नेंद्रादिपदवाच्यत्वं न वा देवतापदवाच्यत्वं अपितु सहस्राक्ष-
स्यैवेंद्रः सहस्राक्ष इत्यादिप्रसिद्धपदसामानाधिकरण्यस्थले
इंद्रपदार्थे सहस्राक्षाभेदानुभवसिद्धत्वात् इंद्रमुपासीतेत्यादौ
इंद्रपदार्थे उपासनान्वयासंभवाच्च अचेतने उपास्यत्वविरहात्।
एवं शिवादिपदानामप्यचेतनवाचकत्वे शिवाय गां दद्यात् इत्या

दं तन्निष्ठ फलोद्देशेन क्रियमाणत्वरूप संप्रदानकत्वस्य त्यागा-
दावन्वया संभव:। अचेतनस्य फलाभावात्। एवं शिवादिसहस्र-
नाम्नां देवतावाचकत्वेन प्रसिद्धानां पर्यायत्वमपि न स्यात्
मंत्रस्य देवतात्वे अनुगतैक शक्यतावच्छेदकावच्छिन्नाभावात्।
एवं देवतानां वरदातृत्वस्मृतिरपि विरुद्धा स्यात्। अचेतनस्य वर-
दातृत्वासंभवात्। तस्मात् मंत्रकरणक हविस्त्यागोद्देश्यत्वस्यैव
देवतात्वरूपतया सचेतनेन्द्रादिरेव देवतेति। न च हविस्त्यागो-
द्देश्यत्वस्य देवतात्वरूपत्वे द्रव्यांतर त्यागोद्देश्ये देवतात्वाभावा-
पत्तिरिति वाच्यम्। हवि: पदस्य द्रव्यसामान्यपरत्वात् प्रयोजन
विरहेणानुपादेयत्वाच्च न च तादृशोद्देश्यतया देवतात्वरूपत्वे
तादृशोद्देश्यता शून्यकालेऽदेवतात्व प्रसंग इति वाच्यं, यदाकदाचित्ता-
दृशोद्देश्यतावत्त्वस्यैव तथात्वात्। न च यदाकदाचिदुद्देश्यत्वस्य
तथात्वे इंद्रिय शरीरानवच्छेदे च तादृशायामपि इंद्रीयात्मनो देवता-
त्वापत्तिरिति वाच्यम्। इंद्रीयादि शरीरस्यैव त्यागोद्देश्यत्वात्।
न च शरीरस्यैव देवतात्वे आत्मन्यतिव्याप्ति: तत्रापि त्यागोद्देश्य-

तासत्वादिति वाच्यं, आत्मव्यावृत्तो द्देश्यतायाः एवलक्षण घटकत्वात्।

न च शरीरस्य देवतात्वे देवताया अचेतनत्वापत्तिरिति वाच्यं तत् त्याग-

स्य मंत्रकरणकत्वाभावात् इंद्रायस्वाहेत्यादेरेव मंत्रत्वात्। अतएव

प्रेतोद्देश्यक त्यागस्यापि मंत्रकरणकत्वाभावान्न प्रेतस्य देवतात्वं

न च तथापि कन्यात्यागोद्देश्य वाज्जामात्रादौ देवतात्वापत्तिः तत्त्या-

गस्य कोदादित्यादि मंत्रकरणकत्वादिति वाच्यं। तन्मंत्रस्य प्रति ग्रहीतृ-

पठनीयत्वेन करणत्वाभावात्। रुद्रादेस्तु नमः पदस्य मंत्रत्वात् तत्

करणकयावणोद्देश्य तासित्त्रादेर्देवतात्वमेव न च नमः पदस्य मंत्र-

त्वे तत्करणक प्रेत श्राद्धोद्देश्य प्रेतस्य देवतात्वापत्तिरिति वाच्यम्,

तत्स्थलीयनमः पदस्य मंत्रत्वानंगीकारात्। शक्ति संबंधेन मंत्रपद-

त्वस्यैव मंत्रत्वरूपत्वात्। ननु मंत्र करणक हविर्भागित्वमेव देवता-

त्वमस्तु किमुद्देश्य तात्पर्यंतानिवेशेन। न चैवमुक्तस्य पित्रादेः श्राद्ध

आकाशायस्वाहेत्यादावाकाशादेश्चासंग्रहः तस्य हविर्भागित्वाभा-

वात् उद्देश्यतायाश्च विसंवादीच्छामादाय तत्रापि संभवादिति वाच्यं,

एवं सति इंद्रोद्देश्यक त्यागमंत्रस्य करणत्व मानाभावे नासंभवस्य-

दुर्वारत्वादिति चेदत्राहुः। मंत्रोच्चारणपूर्वकतया विधिबोधितो यस्त्यागस्तत्र हविस्संबंधितया विषयत्वे तात्पर्यान्न कोपि दोषः आकाशादेरचेतनत्वे हविःस्वामित्वेन तादृशत्यागविषयत्वाभावेन तदुद्देश्यकत्यागस्याकाशाय स्वाहेत्यादि मंत्रपूर्वकत्वेनैव दानस्यापि तुभ्यं संप्रददे इत्यादि वाक्योच्चारणपूर्वकत्वेन शास्त्रबोधितत्वान्मंत्रपर्यंत निवेशः घृतादेरपि देवतासंबंधादि प्रकारेण त्यागविषयतया तत्रातिव्याप्तिवारणाय हविःसंबंधितयेति कौदादित्यादि मंत्रपाठपूर्वकत्वेन विधिबोधिते प्रतिग्रहे द्रव्यसंबंधितया प्रतिग्रहीतुर्विषयतया तत्राति प्रसंगवारणाय त्यागत्व निवेश इति संक्षेपः नन्वेवं पदानां कार्यतान्विते अन्विते शक्तिविरहे कुत्र गवादिपदानां शक्तिरिति चेदत्राहुः गवादिपदानां गोत्वादिविशिष्ट गवादिव्यक्तौ शक्तिः। जात्याकृतिव्यक्तयः पदार्थ इति सूत्रे चाकृति पदं वैशिष्ट्यपरं। सामान्यलक्षणोपगमेतया सर्वत्र गवि शक्तिग्रह संभवात्तदनुपगमे च समान प्रकारकत्वेनैव हेतुहेतुमद्भावोपगमान्न दोषः। पिष्ठमय्यो गाव इत्यादौ च गवादिपदं गोसंस्थानसदृश संस्थानवति लाक्षणिकमतो न तत्रानुप-

पत्तीरिति दीधितिकारादयस्तु गवादिपदानां व्यक्तावेव शक्तिर्नतु गोत्वा-
द्यंशेऽपि न चैवं शाब्दबोध प्रयोजक शक्त्यभावाद्गोत्वादीनां शाब्द-
बोधे प्रकारतया भानानुपपत्तिरिति वाच्यं । पदार्थैकदेशे गोत्वादि धर्मस्य
शाब्दबोध प्रकारतायां तदंशे तत्पद शक्यतावच्छेदकत्वस्यैव प्रयोज-
कत्वात् । शक्यतावच्छेदकत्वं च संकेतीय तत्पद जन्य शाब्दबोधवि-
षयत्व प्रकारतानिरूपित विशेष्यतावच्छेदकत्वं न तु बोधविषयता-
वच्छेदकतया संकेतविषयत्वरूपं विशेषणविधया वाच्यत्वं तथा च
तद्धर्म प्रकारताक शाब्दबोधे तद्धर्मावच्छिन्नत्व विशिष्ट तादृश विशे-
ष्यता संसर्गक शक्तिज्ञानस्यैव कारणत्वमिति नोक्तानुपपत्तिः । यद्येवं
सति शक्तिज्ञानाधुनिक संकेत ज्ञानयोरेकरूपेणैव हेतुतया यत्र द्रव्य
पदाद्गुणवत्वादिना द्रव्यं बोधव्यामित्याकारकः कस्यचित्संकेतः द्रव्य-
त्वाद्यवच्छिन्न तादृश विशेष्यता संबंधेन गृहीतस्तत्र तादृश संकेत
ग्रहात् । द्रव्यत्वेन द्रव्यबोधापत्तिर्गुणवत्वादि प्रकारकबोधानुपपत्ति-
श्चेति दूषणोद्भावनं तदसत् । द्रव्यपदाद्गुणवत्वादिना द्रव्यं बोध-
यामित्येतादृश संकेते द्रव्यांशे द्रव्यत्वस्य प्रकारत्वेऽपि विशेष्यता-

च्छेदकतायां गुणवत्त्वस्य स्वीकारेऽनोत्कानुपपत्त्यादेरिति प्राहुः।
प्राभाकरास्तु गवादिपदानां गोत्वादिविशिष्टशक्तिकल्पने गौर-
वान्नागृहीतविशेषणान्यायेन गोत्वादौ शक्तिकल्पनस्यावश्य-
कत्वाच्च लाघवेन केवलगोत्वादावेव शक्तिः। न चैवं गवादि
पदात् गोत्वादिविशिष्टान्वयबोधानुपपत्तेः विशिष्टे शक्तिविर-
हादिति वाच्यं, गोत्वादिविशिष्टशाब्दत्वस्यैव गोत्वादिशक्तिज्ञान
कार्यतावच्छेदकत्वोपगमेन केवलगोत्वादिशक्तिज्ञानादेव विशि-
ष्टान्वयबोधसंभवात्। अथैवं पश्वादिपदस्थलेऽपि पशुत्वानु-
पाधिशक्तिज्ञानस्यैव पशुत्वादिविशिष्टशाब्दबोधत्वस्य कार्यताव-
च्छेदकत्वोपगमेन पशुत्वादिशक्तिज्ञानादेव पशुत्वादिविशिष्टबोधो-
पपत्तौ तत्रापि विशिष्टशक्त्युच्छेदः। न चेष्टापत्तिः उपाधिप्रवृत्तिनिमि-
त्तकस्थले विशिष्ट एव शक्तिरिति सिद्धान्तविरोधापत्तेरिति चेन्न। जाते-
र्व्यक्तिवेद्यत्वनियमेन जातिप्रवृत्तिनिमित्तस्थले उक्तरीतिः संभवे-
पि उपाधेर्व्यक्तिवेद्यत्वनियमाभावेन तत्रोक्तरीतेरसंभवेन तत्र विशि-
ष्टशक्त्यंगीकारस्यावश्यकत्वात्। न च गोत्वादौ शक्त्युपगमे-

गोत्वं गोपद शक्यमिति शक्तिज्ञान हेतुतायां गोत्वत्वादेर्विशेष्यता-

वच्छेदकतायां निर्विशेषगौरवं विशिष्टशक्तिस्वीकारे च गोर्गोपद

शक्यमिति शक्तिज्ञानहेतुतायां गोत्वादेर्विशेष्यतावच्छेदकतयानिवे-

शेलाघवमिति विशिष्टशक्तिस्वीकारस्यैवोचितं इति वाच्यं। गोत्वादौ

शक्तिस्वीकारेपि तादात्म्येन गोत्वादेरेव विशेष्यतावच्छेदकतया निवे-

शेन गौरवाभावादिति वदन्ति। वदसत् केवल जातिशक्तिस्वीकारे ग-

वादिपदात् कदाचित् समवायेन गोत्वादि विशिष्टस्य बोधः कदाचिच्च

कालिकसंबंधेन गोत्वादिविशिष्टस्य बोध इत्यत्र नियामकाभावप्र-

संगात् विशिष्टशक्तिस्वीकारे च यदा समवायेन गोत्वादि विशिष्टे

शक्तिज्ञानं तदा समवायेन गोत्वादि विशिष्टस्य शाब्दबोधः यदा च

कालिक संबंधेन गोत्वादिविशिष्टे शक्तिज्ञानं तदा कालिक संबंधेन

गोत्वादि विशिष्टस्य शाब्दबोध इति नियम संभवात्। न च केवलगो-

त्वादि शक्तिज्ञानादेव तात्पर्यवशात्तत्संबंधेन गोत्वादि विशिष्टशा-

ब्दबोधनियम संभव इति वाच्यं, सत्यपि तात्पर्यज्ञाने व्यक्तिज्ञानं विना

शाब्दबोधानुदयात्। किं च प्रत्यक्षे जातेर्व्यक्तिवे घत्वानियमेपि-

शाब्दबोधे तथा नियमाभावेनोक्तरीत्या केवलजातिशक्तिज्ञानाद्विशिष्टा-
न्वयबोधो दुरुपपाद इति विशिष्टशक्तिस्वीकार आवश्यक इति दिक्।
इत्थं विशिष्टवाचकत्वेन व्यवस्थितेषु शब्देषु केचन शब्दाः केवल
यौगिकाः यथा पाचकपाठकादयः केचन केवलरूढाः यथा गवादिशब्दाः केचन योगरूढाः पंकजादिशब्दाः केचन यौगिकरूढाः
यथोद्भिदादिशब्दाः। ननु पंकजादिशब्दस्य यौगिकत्वमेवास्तु
किं रूढेति चेन्न पंकजादिशब्दात् योगशक्त्या कुमुदादिशाब्द-
बोधापत्तिवारणाय तत्र रूढि स्वीकारस्यावश्यकत्वात्। न च रूढि-
स्वीकारेऽप्युक्तापत्तिर्दुर्वारेति वाच्यं। रूढिज्ञानस्य प्रतिबंधकत्वोपगमेनो-
क्तापत्तिवारणात्। तदुक्तं रूढिर्योगापहारिणीति। ननु पद्मान्यविशेष्यक
पंकजनिकर्तृत्व प्रकारक शाब्दत्वावच्छिन्नं प्रति पंकज पदं पद्मे शक्ति-
क्तामित्याकारक रूढिज्ञानत्वेन प्रतिबंधकत्वासंभवः। तादृश रूढि-
ज्ञानकाले कर्दमजादि पदात्तद्रूपेण कुमुदादिबोधानुदय प्रसंगात्।
न च पंकजपदजन्यतादृश शाब्दत्वावच्छिन्नं प्रति उक्तरूपेण रूढि
ज्ञानस्य प्रतिबंधकत्वोपगमान्नोक्तदोष इति वाच्यं। तथासत्यप्युक्त

रूढिज्ञानकाले समुदायलक्षणया पंकजपदात्पंकजनिकर्तृत्वेन
कुमुदादिबोधानुपपत्तेर्लक्षणाग्रहस्योक्तरूढिज्ञानप्रतिबंधकता-
यामुत्तेजकत्वकल्पनेगौरवादिति चेन्न अवयवशक्त्या पंकजपद
जन्य पद्मान्यविशेष्यक पंकजनिकर्तृत्वप्रकारकशाब्दत्वावच्छि-
न्नं प्रति उक्तरूढिज्ञानत्वेन प्रतिबंधकत्वात्। न चैवं कुमुदादावे-
व पद्मत्वेन भ्रमात्मकरूढिज्ञानकाले तादृश्येण कुमुदादिबोधानु-
पपत्तिः उक्तरूढिज्ञानरूपप्रतिबंधकसत्वादिति वाच्यं। पद्मान्यविशे-
ष्यकत्वेन न पद्मत्वानवच्छिन्नविशेष्यताकत्वस्य विवक्षणात्।
न चैवं उक्तरूढिज्ञान ~~कालेपद्मस्येव~~ सत्वे पंकजपदकुमुदशक्तमि
ति रूढिज्ञानकाले पद्मस्येव कुमुदादेरपि अवयवशक्त्या पंकजनिक
र्तृकुमुदमित्यादिबोधो न स्यादिति वाच्यं। इष्टापत्तेः। पंकजपद
विशेष्यककुमुदादिशक्तत्वप्रकारकज्ञानाजन्यत्वस्यापि प्रतिब
ध्यतावच्छेदककोटौ निवेशनीयत्वात् वस्तुतस्तु स्वसामाना
धिकरण्य स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसंबंधेनो
रूढिज्ञानविशिष्टान्यशाब्दत्वमेवोक्तरूढिज्ञानप्रतिबध्यतावच्छे

दकत्वाद्यवात्तावतैवोक्तदोषवारणसम्भवाच्चेति सारं। ननु
योग्यताज्ञानस्य धर्मितावच्छेदकभेदेन विभिन्नहेतुताकतया
कुमुदत्वादिधर्मितावच्छेदकपंकजनिकर्तृत्वप्रकारकशाब्द-
त्वावच्छिन्नं प्रति तादृशयोग्यताज्ञानस्य हेतुत्वाकल्पनेनापा-
दकाभावादेव तादृशशाब्दवारणे रूढिज्ञानस्य प्रतिबंधकत्वमा-
नाभाव: न च योग्यताज्ञानस्य धर्मितावच्छेदकभेदेन हेतुत्वे
गौरवात् धर्मितावच्छेदकनिष्ठप्रत्यासत्त्यैव हेतुत्वं कल्प्य-
त इति पंकजनिकर्तृत्वप्रकारतानिरूपितविशेष्यतावच्छेदक-
तासंबंधेन कुमुदत्वादौ शाब्दत्वावच्छिन्नापत्तौ क्रियमाणायां
फलत: पंकजं कुमुदमित्यादिशाब्दापत्तिर्दुर्वारैवेति वाच्यम्।
तथापि कुमुदं कुमुदमित्यादौ शाब्दवारणाय कुमुदत्वभिन्न
वृत्तिविषयतासंबंधेन शाब्दत्वावच्छिन्नं प्रति कुमुदत्वादि
भेदस्य हेतुत्वावश्यकतया योग्यताज्ञानेन शाब्दत्वावच्छिन्न
जननीये कुमुदत्वादिभेदस्य सहकारित्वकल्पनेनैवोक्तशा-
ब्दापत्त्यभावात्। पंकजनिकर्तृत्वनिष्ठप्रकारतानिरूपितविशे-

षतावच्छेदकता संबंधेन शाब्दत्वावच्छिन्नस्य कुमुदत्वादि-

भिन्न एव जायमानत्वात्कुमुदत्वादावजायमानत्वाच्चेति

चेन्मैवं इच्छाविशिष्टविरोधि सामग्र्यभावस्यापि भिन्नविषय-

कानुमिति सामग्र्यभावस्य च विना धर्मितावच्छेदकनिवेशनं

कार्यकारणभावासंभवेन तद्बलादुक्तशाब्दस्यासन्यापत्तिवार-

णाय रूढिज्ञानस्य प्रतिबंधकताया आवश्यकत्वात् लक्षणया

पंकजादिपदात्पंकजं कुमुदमित्यादि शाब्दस्य जायमानत्वेन कुमु-

दत्वादि भेदस्योक्तरीत्या सहकारित्व कल्पनाया असंभवाच्च।

मणिकृतस्तु नियमतोऽरब्धास्मृतं पद्मेमेवव्यक्तिवाचक इ प्रत्य-

येन पंकजनिकर्तृत्वयानुभाव्यते व्यक्तिवचनां संनिहित विशेष-

पत्वनियमादिति रूढिज्ञानस्य प्रतिबंधकत्वे मानाभावइत्याहुस्त-

दसत्। उक्तरीत्या पद्मेनैव सहप्रथमं योगार्थस्यान्वयबोधे

पि कुमुदादि तात्पर्यग्रहवशात्पुनः पंकजपदानुसंधानेन योगा-

देव कुमुदादि शाब्द धीवारणाय रूढिज्ञानस्य प्रतिबंधकता जा

आवश्यकत्वात्। मीमांसकास्तु पद्मत्वस्य प्रयोगोपाधितामु

प्रयोगेनैवोक्तापत्तिवारणे तद्विज्ञानस्य प्रतिबंधकतायां मानाभावः

तथाहि पंकजनिकर्तृत्वनिष्ठप्रकारतानिरूपितविशेष्यताव-

च्छेदकतासंबंधेन शाब्दत्वावच्छिन्नं प्रति तादात्म्येन पद्मत्व-

स्य हेतुत्वकल्पनान्नोक्तापत्तिः पद्मत्वं प्रयोगोपाधिरिति

प्राचीनप्रवादस्याप्युक्त एवार्थः। परन्तु पंकजनिकर्तृत्वनिष्ठप्र-

कारतानिरूपितविशेष्यतासंबंधेन शाब्दत्वावच्छिन्ने समवा-

येन पद्मत्वं हेतुरिति तस्यार्थ इति तदसत्। अतीतानागतप-

द्मादावपि तादृशसंबंधेन शाब्दस्योत्पत्त्या तत्र तत्प्राक्काले

समवायेन पद्मत्वस्याभावेन व्यभिचारात्। अतीतानागतादौ

सविषयकस्यैव वृत्तेः अतएव जातः संबद्धश्चेत्येकः कालश्चेति

प्रवादोऽपि साधु संगच्छते। यदपि तादृशसंबंधेन शाब्दत्वावच्छि

न्ने पद्मत्वाभावः प्रतिबंधक इत्युक्तप्रवादार्थस्तत्र च नोक्तव्य-

भिचारः अतीतानागतादौ पद्मत्वस्येव पद्मत्वाभावस्याप्यसत्त्वा-

दिति तदप्यसत् तथा सति यद्देशावच्छेदेन यदा कार्योत्पत्तिस्त-

द्देशावच्छेदेन तत्प्राक्काले तत्सामग्रीत्याकारकसामग्रीव्याप्ति-

विलयप्रसंगात् न च यद्देशवृत्तिसामग्री पदार्थतद्व्यवहितोत्तरक्ष-
णे तद्देशवृत्तिकार्योत्पत्तिरित्याकारिकाया एव सामग्रीव्याप्त्य-
भ्युपगमान्नदोषः अतीतानागतपञ्चलक्षणदेशवृत्तिपदार्थत्व-
स्येदानीं सत्त्वेन तद्देशवृत्तिकार्योत्पत्तिसंभवादिति वाच्यम्,
तथासति मण्यादिमतिकालेऽपि दाहाद्यापत्तेः तद्देशवृत्तिमण्या-
द्यभावस्य भूतलाद्यवच्छेदेन तत्काले सत्त्वेन तद्देशवृत्तिदाहादि
रूपकार्योत्पत्तिसंभवात्। न चैवं केवलपंकजपदात् निर्ध-
र्मितावच्छेदककपंकजनिकर्तृत्वप्रकारककुमुदादिबोधोऽपि स्या-
दिति वाच्यं। इष्टापत्तेः। कुमुदत्वादिधर्मितावच्छेदककपंकजनि
कर्तृत्वप्रकारकशाब्दस्यैवानभ्युपगमात्। वस्तुतस्तु। पंकजनिकर्तृ-
त्वनिष्ठप्रकारतानिरूपितविशेष्यतासंबंधेन शाब्दत्वावच्छिन्ने पद्म
वृत्तित्वविशिष्टविषयतासंबंधेन ज्ञानत्वेनैव रूढिज्ञानस्य हेतुत्वमतो
न कोऽपि दोषः। उक्तप्रवादस्याप्ययमेव तात्पर्यमित्याहुः तदसत्।
लक्षणाजन्यकुमुदादिशाब्दबोधव्यभिचारात्। शक्तिजन्यत्वस्यज-
न्यतावच्छेदकनिवेशेनोक्तव्यभिचारवारणेऽपि समुदायरूढिशक्तिग्रह

दशायां पंकजपदात्पंकजनिकर्तृत्वेन कुमुदादिशाब्दबोधानुदय-
प्रसंगस्य दुर्वारत्वात्। स्वसमानाधिकरण्य स्वव्यहितोत्तरक्षणो-
त्पत्तिकत्वोभय संबंधेन रूढिज्ञानवत्वस्य जन्यतावच्छेदके निवे-
शे रूढिज्ञानकाले योग्यतादिज्ञानरूप सामान्य सामग्रीबलात् पं-
कजनिकर्तृत्वेन कुमुदादिबोधापत्तेर्दुर्वारत्वात् रूढिज्ञानवदन्य-
तादृशबोधे रूढिज्ञानस्याभावस्यातिरिक्त हेतुत्वोपगमे चातिगौर-
वापत्त्या रूढिज्ञान प्रतिबंधकत्वस्यैव सम्यक्त्वात्। वैयाकरणास्तु
रूढिज्ञान प्रतिबध्यतापा पद्मान्यविशेष्यत्वनिवेशे गौरव-
पंकजनिकर्तृत्व प्रकारकबोधमात्रे रूढिज्ञानस्य प्रतिबंधकतयात-
दशायां पंकजनिकर्तृत्वेन पद्मस्यापि बोधः। किंतु पद्मत्वेनैवे-
ति पंकजादिपदं रूढमेवेति योगरूढः शब्दो नास्त्येव तदुक्तं। जह-
त्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी। पंकजं यमुनादेवी, पद्म-
नाभो युधिष्ठिर इतीत्याहुः तदसत्। पंकजमस्तीत्यादिवाक्यात्
पंकजनिकर्तृ पद्ममस्तीत्याकारकबोधस्य सर्वानुभवसिद्ध-
तया प्रामाणिक गौरवस्यादोषत्वात्। वस्तुतस्तु इत्याद्युपदर्शित-

रीत्यास्माकमपि प्रमाण्य धार्मिकत्वस्यानिवेशाच्चेति दिक्।
अत्रेदं बोध्यं धेनुपदं गोत्वविशिष्टे धानकर्मणि रूढमेव न तु
योगरूढं न च दाधाभ्यां नुर् धेट इच्चेत्यनुशासनात्। योगशक्ति-
दुर्वारेति वाच्यं। तस्योणादिसूत्रत्वेन कथंचिद्व्युत्पादनपरत्वात्
अलंवदतीत्यलवत्। तंडतीति क्षिपतीत्यलवडु इत्यादिवत् उणादि
प्रत्ययशक्तिकल्पने मानाभावात् समुदायशक्तौ लाघवाच्च अत
एव पाणिनिः पंचपादिकाविहितानुणादि प्रत्ययानुणादयो ब-
हुलम् इत्येकेनैव सूत्रेण विहितवान् यत्र च प्रत्ययशक्तिः तत्र
प्रत्येकमेवासूत्रयत्। यत्तु धेनुपदस्य गोत्वं न शक्यं किंतु उपल-
क्षणीभूय शक्यानुगमक शक्त्युपाधिः गोत्ववत्सु धानकर्मसु
धेनुपदशक्तिः गोत्वांशे तु न शक्तिः यशोऽपि तस्य शक्तिग्रहादिति
संस्कारादेवोपस्थितस्य शाब्दधीविषयत्वसंभवात् न च लाघवाद्
गोत्वं शक्यं धानकर्मत्वं शक्त्युपाधिरीत्येवास्तु विनिगमनाविर-
हादिति वाच्यं। गोत्वजातिः शक्यत्वे तुल्यवित्तिवेद्यतया व्यक्ति
लाभसंभवे व्यक्तेरशक्यतापत्तेः तथा च धानकर्मत्वस्य गोत्वनिष्ठ-

शक्त्युपाधित्वासंभवे धानकर्मत्वमानं न स्यात् वर्षमादिवोधस्य-

स्यादित्यस्यैव विनिगमकतया धनकर्मत्वरूपोपाधिविशिष्टे धर्मि-

ण्येव शक्तिरिति तन्न धानकर्मत्वस्याननुगतत्वेनातिप्रसक्तत्वाच्च

शक्यतावच्छेदकत्वासंभवादिति, अथ यौगिकरूढस्य योगरूढाद्

वैलक्षण्यं कथं पार्थक्येनोक्तिरिति चेन्न योगरूढस्थले पंकजादि

पदादेकदैकस्य धर्मिणो योगरूढिभ्यां बोधः यौगिकरूढस्थले तु

उद्भिदादिपदात् कदाचिद् योगशक्त्या तरुगुल्मादीनां बोधः कदाचित्

चोद्भिदा यजेतेत्यत्र रूढिशक्त्या यागविशेषस्य बोध इति वैलक्षण्य-

स्य स्फुटत्वात् एवमप्यूह्यं शक्तिश्चेश्वरसंकेतः। स चास्माच्छब्दा-

दयमर्थो बोद्धव्य इत्याकारकेश्वरेच्छारूपः तद्विषयत्वरूपो वा एतदा-

शयं नैव शक्तिः पदार्थान्तरमित्युक्तिर्नव्यानां विषयत्वस्य पदार्थान्त-

रत्वात् विवेचितं चैतदस्माभिर्मेघानन्दी प्रकाशे, न चैवं वाच्यवाचक

व्यवस्थानुपपत्तिः स्यात् सर्वत्र विशेषादिति वाच्यं बोध्यत्वेन बोध-

निष्ठजन्यतानिरूपकत्वेन च विषयतया यथाक्रमं वाच्यवाचक-

व्यवस्था संपादकत्व संभवात्। न चेश्वरज्ञानादिकमादाय विनि-

गमनाविरुद्ध इति वाच्यं इच्छात्वस्या विवक्षणेन तस्यापि शक्तित्वस्येष्टत्वात्। आधुनिक संकेतस्येच्छात्व दर्शने नेच्छाया एव तत्पात्व संभवाच्च अत्र शंच: वाधति ग्राम गाम इत्यादि असाधुशब्दाच्छाब्द बोध वारणाय साधुत्व ज्ञानं शाब्दबोधजनकं तद्विषय साधुत्वमपि निरुक्त शक्तिमत्वमेव तथाहि साधुत्वं न प्रतिपादकत्वं असाधोरपि प्रतिपादकत्वात् नाप्यनादित्वं हेरयो-हेलयो इति वदंतोऽसुरा: पराबभूवुरिति वेद ध्वने नानादित पालि शब्दस्य साधुत्वापत्ते: लौकिक गौणलाक्षणिकयो: आधुनिक संकेतितानां चा साधुतापत्ते: नापि साधुत्वं जाति: व्याकरणाध्येतृ पुरुष वेद्यकत्वादिना सांकर्यात्। नापि पुण्यजनक शब्दत्वं परोपकार हेतावप साधावति प्रसंगात्। अपकार हेतौ संस्कृते अप्रसंगाच्च, तस्माच्छक्तिमत्वमेव साधुत्वं, एवं सत्यपभ्रंशस्यापि साधुतापत्ति: तस्मान्नियमेनार्थ प्रतीत्याव्यवहाराद्यनिष्पत्तिसंभवेन तत्र शक्ति संभवात्, न चापभ्रंशेन स्मारितात् साधु शब्दादेवार्थ प्रतीतिरिति वाच्यं। पामराणां साधुशब्दाप्रतिसंधाने-

पि ततोऽर्थ प्रत्ययात् तदर्थकसंस्कृतेन प्रत्ययाच्च। न च तत्र शक्ति भ्रमाद्बोध इति वाच्यं। बाधकं विना भ्रमत्वासंभवात्। अन्यथाऽपभ्रंशेषु शक्तिः साधुशब्द एव तदारोप इत्येव किं न स्यात्। न च तस्य साधुत्वे यज्ञे प्रयोगापत्तिरिति वाच्यं। नापभ्रंशितवै-न म्लेच्छितवै इत्यनेन यज्ञे निषेधादेव तदनापत्तेः। युज्यते चैतत्। अन्यथा साधुभिर्भाषितव्यमिति विधेरेवापभ्रंशस्याप्रयोगसंभवे नापभ्रंशितवै इति निषेधस्य व्यर्थत्वापत्तेः। न चापभ्रंशस्य कोषादावव्युत्पादनान्नैवमिति वाच्यं। कोषादौ धर्मविशेषजनकशब्दानामेव व्युत्पादनादिति तदसत्। अपभ्रंशस्य शक्तिमत्त्वांगीकारे अर्थवदधातुरित्यादि सूत्रेण प्रातिपदिकसंज्ञापत्तौ तदुत्तरं ङ्याप्प्रातिपदिकादिति सूत्रेण विभक्त्यापत्त्या तस्य शक्तिमत्त्वानंगीकारात्। न चैवं तस्य साधुत्वाभावादेव यज्ञे प्रयोगासंभवे नापभ्रंशितवै इति निषेधवैयर्थ्यापत्तिर्दुर्वारेति वाच्यं। अपीह्या वैभाषा इतिवत् तस्य विधौ प्राप्तानुवादत्वेनादोषात्। न चैवमपभ्रंशात् शाब्दबोधानुपपत्तिः साधुत्वज्ञानाभावादिति वाच्यं। व्युत्पन्ना-

नां साधुशब्दस्मरणेनाव्युत्पन्नानां च शक्तिभ्रमेण तत्सम्भवात्।
न च गवादिशब्दघटितायाः शक्तेः कथमपभ्रंशे भ्रमसम्भव इति
वाच्यं। वक्ष्यमाणरीत्या तत्सम्भवात् तथाहि केनचिद् गोशब्दे
प्रयोक्तव्ये प्रमादात् गावीशब्दे प्रयुक्ते व्युत्पन्नस्तेन शब्देन गोशब्दमु-
न्नीय ततो गां प्रतीत्य व्यवहृतवान् समीपस्थो व्युत्पित्सुश्च गावी
शब्दादेवायं गां प्रतीतवानित्यवगत्य गावीशब्दमेव गोशक्तत्वेन
प्रतीत्य व्युत्पादयतीत्याति यत्तु एवमपि भ्रमानुपपत्तिस्तथाहि तत्तत्
पदपदार्थघटितेश्वरेच्छाया गवादिपदघटितया गावीशब्दस्यबो-
ध्यत्वप्रकारकत्वावच्छिन्नेच्छा न शक्तिः किंतु गोशब्दस्य तत्वेन
ग्रहश्च पामरस्य गावीशब्दात्मकापभ्रंशेन सम्भवति विभिन्नानु
पूर्वकित्वरूप विशेष दर्शन सत्वात् साधारणधर्मदर्शनाभावाच्च
न च गावीशब्दघटितेच्छायामीश्वरीयत्व भ्रम एव शक्तिभ्रम इति
वाच्यम्, ईश्वरस्य भ्रान्ततामपि शाब्दबोधापादेति वैयाकरणादिभि-
रुक्तं तदसत्। मीमांसकनैयायिकादिसाधारणस्य शक्तित्वस्यैव्या-
भावेन शक्तित्वेन शक्तिज्ञानस्य हेतुत्वासंभवेनानुभवजनकतावच्छेदक-

धर्मित्वे न तज्ज्ञानस्य हेतुतया तादृश धर्मवदिति भ्रमस्यसंभवात् ।

किंच गौर्गोपदशक्य इत्यादि शक्तिप्रकारकं ज्ञानं न हेतुः किंतु शक्ति

संबंधेन गोपदादिप्रकारकं गोपदवती गौरित्याद्याकारकं लाघ-

वात् । एवं च व्यधिकरणसंयोगादिसंबंधेन घटादौ रूपस्येव गवादि

पदघटितशक्तेः प्रसिद्ध्या तेन संबंधेन गवादिपदप्रकारको गावी पद

वती गौरित्याद्याकारक भ्रमः स्वपद एव पद्रा गवादिविशेष्यकं शक्तिसंबं-

धेन गवादिपदप्रकारकं शक्तिज्ञानं न हेतुः तथासति गौरवापत्तेः किंतु लाघ-

वात् गोपदादि विशेष्यक शक्तिसंबंधेन गवादिप्रकारकज्ञानमेव हेतुः तथा-

हि गोपदत्वं नाम गकाराव्यवहितोत्तरौत्वं तत्राव्यवहितोत्तरत्वांशे संश-

यात्मक ज्ञानवारणाय तदंशे गकाराव्यवहितोत्तरत्वत्वावच्छिन्नाभावा-

प्रकारकत्वे सति गकाराव्यवहितोत्तरत्वत्वावच्छिन्न प्रकारकत्व रूपं नि-

श्चयत्वं निवेशनीयं गवादि विशेष्यकपदप्रकारकज्ञानहेतुतामते,

गवादिपदविशेष्यक गवादिप्रकारकज्ञानहेतुतामते च गवादिपदत्व रूप-

धर्मितावच्छेदकांशे संशयाभावेन तदंशे निश्चयत्वानिवेशेन लाघवं,

न चैतन्मतेऽपि गवादिप्रकारांशे निश्चयत्वनिवेशात् साम्यमिति वाच्यं,

तत्स्थानीयस्यगवादिपदरूपप्रकारांशे निश्चयत्वानिवेशस्य तन्मते-
पिसत्वात्। अव्यवहितोत्तरत्वांशे निश्चयत्वानिवेशस्य पुनरावे-
श्यात्। इत्थं च गव्यादिपदं गवादिपदघटितशक्तिसंबंधेन गवादिम-
दितिभ्रमस्यैवपत्र एवेति सारं। वस्तुतस्तु ईश्वरेच्छारूपशक्तेस्तत्वेन
न शाब्दबोधोपयोगित्वं ईश्वरमविदुषां शाब्दबोधानापत्तेः किंतु
संकेतत्वेनैव एवं चापभ्रंशाद् भ्रमं विनैव शाब्दबोधस्योपपाद-
तत्राधुनिकसंकेतस्य सत्वात्। नन्वपभ्रंशस्याप्युक्तरीत्या शाब्द-
बोधजनकत्वेन सन्मात्रविषयकेश्वरेच्छाविषयत्वस्य तत्र
सत्वात्तस्य शक्तिमत्वं दुर्वारं अन्यथा भगवदिच्छायाः सन्मात्र
विषयकत्वोच्छेदापत्तेः एवं लाक्षणिक गंगादिपदस्याप्युक्तरीत्या त-
टादिशक्तत्वं दुर्वारमिति चेन्न, तत्पदजन्यबोधविषयतात्वावच्छिन्न-
प्रकारतानिरूपितविशेष्यतासंबंधेनेश्वरेच्छात्वस्येश्वरेच्छानिरू-
पिततादृशविशेष्यतात्वस्य वा तत्पदशक्यत्वरूपतया तस्य संस्क-
निरूपितस्यैव प्रवाहाविच्छेदेन च स्वीकारेणापभ्रंशादेश्शक्तत्वस्य
वारयितुं शक्यत्वात्। न च विनिगमकाभावात्तत्रापि तत्स्वीकारोऽस्त्व-

ति वाच्यं । तत्र शक्तिभ्रमादिना लक्षणया च निर्वाहे पदार्थस्मित्य-
नुरोधेन कल्प्यमानसंबंधनाकस्य निरुक्तशक्यत्वस्य साधुसंस्कृ-
त एव स्वीकारात् फलबलेन तथैव कल्पनात् अन्यथापभ्रंशस्य
साधुतापत्तौ यद्वा प्रयोगापत्तेः एतेनेश्वरेच्छाया एकत्वेन सर्ववि-
षयकत्वेन शक्यार्थव्यवस्थानुपपत्तिरित्यपि समाहितं । फलबलेन
निरुक्ततत्तत्पदशक्यत्वस्य तत्तत्पदार्थ एवाङ्गीकारात् । यत्तु प्रसि-
द्ध्यादिकं सर्वदेशीयशिष्टपरिगृहीतत्वादिकं च विनिगमकमिति तद-
सत् । प्रसिद्धेरनियतत्वात् । लाक्षणिकेषु सर्वदेशीयशिष्टपरिगृ-
हीतत्वस्य सत्वाच्च । तत्तद्देशनियतसंस्कृतेषु सर्वदेशीयशिष्टपरि-
गृहीतत्वाभावेन शक्तेरसिद्ध्यापत्तेश्चेति वदंति । नव्यास्तु व्याकरण-
व्युत्पाद्यत्वमेव साधुत्वमिति वदंति तेषामयमाशयः साधुत्वं न
शक्तिमत्वं लाक्षणिकादेरसाधुतापत्तेः न च तस्यापि क्वाचित्कशक्ति
सत्वात् साधुत्वसंभव इति वाच्यं । घटादिपदस्य पटाद्यर्थे साधुतावा-
रणाय तत्तदर्थशक्तत्वस्य तत्तदर्थे साधुत्वरूपतया अवश्यवाच्यत्वात्
केवलयोः प्रकृतिप्रत्यययोरसाधुत्वापत्तेश्च प्रकृतिप्रत्ययसमु-

घटे समासादौ शक्यभावेना साधुत्वापत्तेश्च, न च तस्य प्रत्येक घटक
शक्तिमादायत्व मुपपादयतीयमिति वाच्यं तथासति बाधति ग्रामागाम
इत्यादेरपि साधुत्वापत्ते। एतेन वाचिमत्वमेव साधुत्वमित्यपि परा-
स्तं। तस्माद्व्याकरणव्युत्पाद्यत्वमेव साधुत्वं यः शब्दो यस्मिन्नर्थे
व्याकरणेव्युत्पादितः स तत्र साधुः न चैवं गावीशब्दोपि गंगणा-
पतिं आवितुं शीलमस्येत्यर्थे साधुः स्यादिति वाच्यं इष्टत्वात्तस्य गवा
द्यर्थ एव साधुत्वात् तदर्थे तस्य व्याकरणाव्युत्पाद्यत्वात्। यैषामाधु-
निकसंकेतितडित्थादि शब्दानां विशेषव्याकरणेन व्युत्पादनं नास्ति ते षामपि
उणादयो बहुलमित्यादिना व्युत्पादनान्न दोषः एतज्ज्ञानं च न शाब्दबोधे कारणं
व्याकरणव्युत्पाद्यत्वाग्रहेपि शाब्दबोधात् किंतु व्याकरणाव्युत्पाद्यत्वरूपासाधु-
त्वनिश्चयः प्रतिबंधकस्तदभावः कारणं अतएव साधुशब्दे साधुत्वनिश्चये त
तो न शाब्दबोधः न चापभ्रंशात् व्युत्पन्नानां कथं शाब्दबोधः असाधुत्वनिश्च
यस्य प्रतिबंधकस्य तेषां सत्वादिति वाच्यम् तेषां साधुशब्दानुमानेन साधु
शब्दस्मरणेन वा शाब्दबोधात् न चाव्युत्पन्नानां मसाधुत्वनिश्चये कथं तस्मा
त् शाब्दबोधः तेषां साधुशब्दानुमानस्य साधुशब्दस्य स्मरणस्य वा

असंभवादिति वाच्यं, व्युत्पन्नपुरुषीयशाब्दबोध एव साधुत्वनिश्चयस्य
प्रतिबंधकत्वात् । न चैवं व्युत्पन्नानामसाधुशब्दात् सामान्यसामग्रीबलात्
शाब्दबोधापत्तिर्दुर्वारैवेति वाच्यम् । अव्युत्पन्नपुरुषीयशाब्दबोधे व्युत्प-
त्यभावस्यापि हेतुतया सामान्यसामग्र्याः फलजननेऽसाधुत्वनिश्चयाभाव
व्युत्पत्यभावान्यतरस्य सहकारित्वोपगमेनोक्तापत्त्यसंभवात् । यत्तु व्युत्प-
न्नानां साधुशब्दानुमानेन साधुशब्दस्मरणेन वा शाब्दबोधोपपादनं न
सम्यक् अनुमानस्य व्याप्तिग्रहविलंबेन स्मरणस्य चोद्बोधकविलंबेनाऽ
नियतत्वात् अनुमानस्य स्मरणं विनापि व्युत्पन्नानां बोधानुभवाच्च भवदु-
क्तसंस्कृतैरयमर्थो न बुद्धः किंत्वेतदुक्तं भाषयेति व्युत्पन्नव्यवहाराच्चेति
तदसत् फलबलेनानुमानस्य स्मरणस्य वा सामग्र्या नियमेन कल्पनात्
उक्तबोधानुभवे मानाभावाच्च कारणं विना कार्यानुभवस्याप्यसिद्धेः
भवदुक्तेत्यादिव्यवहारोऽप्यसिद्धः; प्रत्युत भवदुक्तसंस्कृतादेतदुक्तभाषा-
तश्चायमर्थोऽवगतः गवादिशब्दे वक्तव्ये गाव्यादिशब्देनेनोक्त इत्यादि
व्यवहारस्यैव सर्वसिद्धत्वात् । अतएव वाक्यपदीये हरिणाप्युक्तं ते
साधुष्वनुमानेन प्रत्ययोत्पत्ति हेतवः तादात्म्यमुपगम्यैव शब्दो-

स्यप्रकाशका: । न । शिष्टैरनुमन्यंते पर्याया इव साधव: न यत:
स्मृति शास्त्रेण तस्मात् शब्दादवाचका: अम्माम्मेति यदाबाल:
शिक्ष्यमाण: प्रभाषते । अव्यक्तं तद्विदां तत्र व्यक्ते भवति निर्णय: एवं
साधौ प्रयोक्तव्ये योपभ्रंश: प्रयुज्यते तेन साधुव्यवहित: कश्चिद-
र्थोभिधीयत इति अन्यथोक्त ग्रन्थेनापभ्रंशस्थले साधुशब्दानुमा-
नेन साधुशब्दस्मरणेन वा शाब्दबोधोपपादनात् तदसंगत्यापत्ते: । न च व्या-
करणव्युत्पाद्यत्वं न साधुत्वं व्याकरणत्वस्य शब्दव्युत्पादकत्वरूपतया-
न्योन्याश्रयादिति वाच्यं पाणिन्यादि संकेतसंबंधेन व्याकरणपदत्व-
स्यैव व्याकरणत्वरूपत्वात्, न च व्युत्पन्नानां शास्त्रकार संकेतितात्पक्ष-
तादि पदादश्वादिषु संकेतितात् गवादि शब्दाश्चकयं तत्तदर्थप्रत्यय:
तेषां तत्तदर्थे साधुत्वानिश्चयादिति वाच्यं । तन्नाति बध्यतावच्छेदक
कोटौ तत्तदर्थशक्ति प्रयोज्यत्वस्यापि निवेशात् न चैवमपि तेषां यज्ञे
प्रयोगो न स्याद साधुत्वादिति वाच्यं इष्टापत्ते: न च लाक्षणिकानां
तत्तदर्थे व्युत्पादन विरहेण तदर्थे तेषामसाधुत्वापत्तिरिति वाच्यम्
वेदस्य लाक्षणिकानां निरूढ लाक्षणिकानां च तत्तदर्थे व्युत्पाद्यत्वस्य

सत्वात् । आधुनिकलाक्षणिकानां असाधुत्वेऽव्यापत्त्रोरितिदिक् ।

वैयाकरणस्तु शाब्दबोधेन साधुत्वज्ञानं कारणं न वाऽसाधुत्वनिश्चयः

प्रतिबंधकः न चैवमसाधुशब्दाद्यापत्तीत्यादेः शाब्दबोधापत्तिरिति

वाच्यं । इष्टत्वात् न चैवं च्युतसंस्कृतेर्दोषत्वानुपपत्तिः तद्बीजस्य

शाब्दबोधासंभवस्य भवन्मतेऽभावादीति वाच्यं । साधुशब्दप्रयो-

क्तव्येऽसाधुशब्दः किमिति प्रयुक्त इत्यनुसंधानेन सहृदयोद्वेगस्यैव

तद्बीजत्वात् । न चैवं साधुत्वस्यक्वोपयोगः, तज्ज्ञाने शाब्दबोध हेतु-

तायास्तदभावनिश्चये वाशाब्दबोध प्रतिबंधकतायाभवद्भिरनंगी-

कारादीति वाच्यं । एकः शब्दः सम्यक् ज्ञातं सुष्ठु प्रयुक्त स्वर्गे लोके च

कामधुक् भवति साधूनेव प्रयुंजीतेत्यादि बोधित पुण्यजननेन तदु-

पयोगात् । साधुत्वं च व्याकरणव्यंग्यः शब्दनिष्ठः पुण्यजनकताव-

च्छेदको जातिविशेषः न च कत्वादिना संकरान्नैवामीति वाच्यम्

दूषकताबीजाभावेन सांकर्यस्या दोषत्वात् । एवं च साधुशब्दस्य गावि

वापत्यादेर्मोघापभ्रंशस्य च बोधजनकत्वेन तेषामपि शास्त्रस्यैव

बोधकत्वं बाधकत्वस्यैव शक्तित्वात् युज्यते चैतत् । मीमांसकनैया

पिकादीनां शक्तित्वस्यैक्या भावेन बोधजनकतावच्छेदकधर्म-
त्वेन ज्ञानस्य हेतुत्वं वाच्यं । तथा च बोधजनकत्व ज्ञानस्यैव लाघ-
वेन शाब्दबोध हेतुत्व मुचितं किंच ईश्वरेच्छा रूपसंकेतस्य शक्ति-
त्वमते तस्या अस्मा च्छब्दादयमर्थो बोधव्य इत्याकारकत्वस्यैव अ-
यं शब्द एतदर्थ बोधक इत्याकारकत्वस्यापि विनिगमना विरहेण सु-
वचतया बोधजनकत्व प्रकारकेच्छाया: शक्तित्वापेक्षयाबोधजनक-
त्वस्य शक्तित्वे लाघवं स्पष्टमेव । अथ गवादीनिष्ठ कर्मताद्य-
न्वयबोधे गवादिवृत्तितया ज्ञानपदसमाभिव्याहृत विभक्तिजन्य कर्म-
त्वाद्युपस्थिते र्हेतुत्वात् विनापभ्रंशात्कपं शाब्दबोध: न च नाम्नातिरिक्त
जन्यकर्मत्वाद्युपस्थिति त्वेव कारणनामत्वं च सुवंतत्वं तद्भेदश्चाप-
भ्रंशे पीति वाच्यं । एवं सति निराकांक्षापभ्रंशादपि शाब्दबोध प्रसंगादि-
ति चेन्न गवादिवृत्तितया ज्ञानपदसमाभिव्याहृत कर्मत्वोपस्थापकपद
ज्ञान विशिष्ट कर्मत्वाद्युपस्थितेरेव शाब्दबोधजनकत्वात् यादृश पद
ज्ञान जन्य कर्मत्वाद्युपस्थिति सत्वे शाब्दबोध: तज्जन्यतासंसर्गेण वै-
शिष्ट्यं वाच्यं तेन नाति प्रसंग: संबंधानुगमस्या दोषत्वात् । अत

एवौदनः पक्त्वा भुज्यत इत्यादौ जानामि सीताजनक प्रसूते त्यादौ च तन्निर्वाहः। न च बोधकत्वस्य शक्तित्वे गंगादि पदे तीरादि बोधकतया आपसत्वेन सत्तर्यौ बोधपत्तौ लक्षणा युच्छेद इति वाच्यं। तत्र गंगादि पद निष्ठायास्तीरादि बोधकत्व प्रकारेच्छाया इव मम गंगादि पद निष्ठस्य तीरादि बोधकत्वस्यापि शक्तित्वाभावात्, गंगापदादि निष्ठं तीरादि बोधकत्वमेव लक्षणा कोषादि प्रसिद्ध संबंधता पन्न बोधकत्वस्यैव शक्तित्व-मिति व्यवस्थाया संभवाच्च पद्यशक्ति लक्षणयोरभेद स्वपरत्व प्रसिद्ध शक्य संबंधित्वेन गृहीतार्थ विषयक बोध जनकत्वं लक्षणा प्रसिद्धार्थ विषयक बोधजनकत्वं तच्छक्तित्वेन व्यवह्रियते प्रसिद्धत्वं च प्रचुर प्रयोगविषयत्वं शक्त्यादि नियामकतया प्रसिद्ध्यादेस्तवा-प्यावश्यकत्वात्। न चापभ्रंशस्यार्थवत्वात्प्रातिपदिकत्वे सुबुत्पत्तौ व्याकरण व्युत्पाद्यत्वात् साधुत्व प्रसंग इति वाच्यम्। अनभिधाना देवानभि धानात् भाषा शब्देभ्यः सुबुत्पत्तौ भाषात्वस्यैव भंगापत्तेश्च तस्माद्बोधकत्व स्यैव शक्तित्वं निष्प्रत्यूहमित्याहुस्तदसत्। असाधु शब्दस्य स्वरूपायोग्य तया तस्मात् शाब्दबोधस्यानुभव विरुद्धत्वात्। अन्यथाऽसाधु शब्दस्यैव

निराकांक्षापद: कर्मत्वमित्यादेरपि शाब्दबोधजनकत्वस्य सुवचतया कांक्षादिज्ञानस्यापि शाब्दबोधहेतुताविलयापत्ते: साधुत्वं जातीत्यप्ययुक्तं इहानुमानपरिच्छेदे भवानंदीप्रकाशे चास्माभिस्संकरदूषकतापव्यवस्थापनेन कत्वादिना संकरस्य दोषत्वात् । बोधकत्वं शक्तीति त्यप्यसमंजं, सामान्यतो बोधकत्वस्य तत्वे घटादिपदेऽपि पटादिशक्तत्वापत्त्या तत्तत्पदनिष्ठ तत्तदर्थबोधजनकत्वमेव तत्तत्पदे तत्तदर्थशक्तमेवमित्येव वाच्यं तथा चाधुनिकसंकेतित चैत्रादिपदे शाब्दबोधात् प्राक् तत्तदर्थबोधजनकत्वाग्रहेण तं विनापि तत्प्रकारकसंकेतज्ञानमात्रात् शाब्दबोधोदयेन बोधजनकत्वज्ञानस्य हेतुत्वासंभवात् । न च तृणारणिमणिन्यायेन बोधकत्वज्ञान संकेतज्ञानयोर्वैकल्पिककारणत्वाभ्युपगमान्न दोष इति वाच्यं, संकेतज्ञानस्य हेतुतावश्यकत्वे सर्वत्र तद्धेतुतयैव निर्वाहे बोधकत्वज्ञान संकेतज्ञानयोर्वैकल्पिककारणतांगीकारे गौरवापत्ते: । न च संकेतज्ञानेन बोधकत्वमनुमायाधुनिक संकेतित चैत्रादिपदे बोधकत्वज्ञानादेव शाब्दबोधसंभवेन सर्वत्र बोधकत्वज्ञानस्यैव हेतुत्वोपगमान्न ~~दोष~~ गौरवमिति वाच्यं । व्याप्त्यादि

प्रतिसंधानाभावेपि शाब्दबोधात् । फलोपधायकत्व रूपबोध-
कत्व ज्ञानस्य हेतुत्वे शाब्दबोधात् पूर्वं तदसंभवात् गौरवात् ।
तस्यकादाचित्कत्वेन शक्तौ शब्दार्थयोर्नित्यसंबंधत्वानुपपत्ते-
श्च । न च स्वरूपयोग्यता रूप बोधकत्वज्ञानस्यैव हेतुत्वोपग-
मान्न दोष इति वाच्यं स्वरूप योग्यतायाः जनकतावच्छेदक रूप
तया बोधकत्वस्य तत्वे आत्माश्रया पत्यासंकेतस्यैव तत्व वाच्य-
मिति सर्वत्र संकेत ज्ञानस्यैव जनकतया अस्मदभिमतासिद्ध ब्रह्म-
णोपि दुर्वारत्वात् । अथ जनकत्वमतिरिक्तं पदार्थान्तरमेव
ननु जनकतावच्छेदकरूपं तच्च जनकतावच्छेदकरूप ग्रहाविनाप्य-
नुमानादिना सुसंग्रहं प्रत्यक्षेण जनकताग्रह एव जनकतावच्छेदक
रूपग्रहापेक्षणादिति बोधजनकत्वज्ञानमेव सर्वत्र कारणमस्तु
लाघवात् अपभ्रंश शब्द साधारण्ये आधुनिक संकेतित सादिपदादि सं-
केत ज्ञानाद्बोधकत्वमनुमेयं तवानादि पदे तदर्थ बोधकत्व ज्ञानात्
तत्संकेतवादिति चेन्मैवं तद्धीजनकत्वना नाव्याके गर्भत्वाद्गुरु,
संकेतस्तु एकत्वाल्लघुरिति स एव पदपदार्थयोस्संबंधः । किं च

तद्बीजनकत्वादिमेव संबंधोऽपेक्षित इति न तदेव संबंध आत्माश्रयात्। अतएव प्रत्याय्य प्रत्ययात् वाचकत्वसंबंधज्ञानसहकारीति प्रत्यायकत्वोपपादकतया वाचकत्वोपयोग इत्युक्तं महार्णवेऽपि। न च तद्बीजनकत्वेन ज्ञातत्वं संबंध इति नात्माश्रय इति वाच्यम्। तज्ज्ञानस्य स्मृतानुपयोगात् संबंधितावच्छेदकज्ञानस्यैव तथात्वात् प्राक् सत्त्वानियमाच्च, एतेन शब्दत्वसमानाधिकरणतत्तज्जनकतान्यसंबंधेन बोधस्यैव शक्तित्वमिति ममापेक्षस्यैव लघोः संबंधत्वमिति नवीनवैयाकरणोक्तमपि परास्तं। किं च तद्बीजनकत्वज्ञानमात्रस्य हेतुत्वपदमात्रं स्मृत्यात्मकाकाशधीजनकमिति ज्ञानादाकाशशाब्दबोधप्रसंगः न च तच्छब्दबोधजनकत्वज्ञानं कारणमिति नोक्तदोष इति वाच्यं। भूतलं घटवदित्याकारकघटशाब्दबोधजनकत्वज्ञानस्य भूतलादिपदेऽपि सत्त्वे नातिप्रसंगतादवस्थ्यात्। अपि च घटपदात् शक्तिभ्रमेण पटशाब्दबोधे पटशक्त्यभावनिश्चयदशायामपि पटशाब्दबोधजनकत्वज्ञानात् शाब्दधीप्रसंगः। एवं घटपदं पटे आधुनिकसंकेतितं न तु शक्तमिति ज्ञानेऽपि

न शाब्दधीरिति ईश्वर संकेत ज्ञानमेव कारणमिति सिद्धं। एवमन-
भिधानादेवानभिधानमित्यपास्तं। तस्य दुर्वचत्वात्। तस्य श्वेश्वे
प्रयोगाभावादेवा प्रयोग इत्यत्र पर्यवसानेन पूर्वप्रयोगाभाव एव किं
बीजमिति प्रश्ने उत्तराभावाच्च, गत्यंतराभावस्थल एव तदंगीकाराच्च
अन्यथा सकल व्युत्पन्नामुच्छेद एव स्यात् किं बहुना व्याकरणस्यैव
नैरर्थक्य प्रसंगः पूर्व पूर्वा प्रयोगेनैवोपपत्तेः भाषात्वसंगापत्तेरपि
चतिभंगे प्रव बयेत्यादिन्यायमनुसरतीति न किंचिदेतत् अतएव
अपभ्रंशो पशब्दः स्याच्छास्त्रे शब्दस्तु वाचक इति अमरकोषानुशा-
सनमपि स्वरसत एव संगच्छते बोधकत्वस्य शक्तित्वे तदसंगतेरिति
दिक्। शक्तिग्रहश्च व्यवहारात्। व्याकरणादितश्च तदुक्तंशक्ति
ग्रहं व्याकरणोपमानकोषाप्तवाक्याद् व्यवहारतश्च। वाक्यस्य शे-
षाद्विवृत्तेर्वदंति सानिध्यतः सिद्धपदस्य वृद्धा इति तत्र व्याकर-
णात् शक्तिग्रहो यथा कर्त्तरि कृदित्यादिव्याकरणात्कृदादीनां कर्त्रा-
दौ, नन्वेवं "लः कर्मणि च भावे चाकर्मकेभ्य" इति सूत्रे कर्त्तरि कृ-
दिति सूत्रस्थस्य कर्त्तरीत्यस्यानुवृत्त्या कर्त्तरि लकार विधाने चाख्या-

न शाब्दधीरिति ईश्वर संकेत ज्ञानमेव कारणमिति सिद्धं । एवमन-
भिधानादेवानभिधानमित्यपास्तं । तस्य दुर्वचत्वात् । तस्य पूर्वपूर्व
प्रयोगाभावादेवा प्रयोग इत्यत्र पर्यवसानेन पूर्वप्रयोगाभाव एव किं
बीजमिति प्रश्ने उत्तराभावाच्च, गत्यंतराभावस्थल एवतदंगीकाराच्च
अन्यथा सकल व्युत्पन्नामुच्छेद एव स्यात् किंबहुना व्याकरणस्यैव
नैरर्थक्य प्रसंगः पूर्व पूर्व प्रयोगेणैवोपपत्तेः भाषात्वसंगापत्तेरपि
यतिभंगे प्रत्व वक्ष्येत्यादिन्यायमनुसरतीति न किंचिदेतत् अतएव
अपभ्रंशोपशब्दः स्याच्छास्त्रे शब्दस्तु वाचक इति अमरकोषानुशा-
सनमपि स्वरसत एव संगच्छते बोधकत्वस्य शक्तित्वे तदसंगतेरिति
दिक् । शक्तिग्रहश्च व्यवहारात् । व्याकरणादितश्च तदुक्तं शक्ति
ग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शे-
षाद्विवृत्तेर्वदंति सानिध्यतः सिद्धपदस्य वृद्धा इति तत्र व्याकर-
णात् शक्तिग्रहो यथा कर्त्तरि कृदित्यादिव्याकरणात्कृदादीनां कर्त्रा-
दौ, नन्वेवं "लः कर्मणि च भावे चाकर्मकेभ्य" इति सूत्रे कर्त्तरि कृ-
दिति सूत्रस्थस्य कर्त्तरीत्यस्यानुवृत्त्या कर्त्तरि लकारविधाने चाख्या-

तस्यापि कर्त्तरि शक्तिः स्यात्तथा चाख्यातस्य कृतौ शक्तिरिति नैया-
यिकराद्धांतो दत्तजलांजलिः स्यादिति चेन्न असति बाधके एव
व्याकरणस्य शक्तिग्राहकतोपगमेन कर्त्तरि शक्तावनंतकृतीनां शक्य-
तावच्छेदकत्वकल्पनरूपगौरवात्मकबाधकसत्वेन कृतित्वरूपजात्यव-
च्छिन्ने शक्तिकल्पने लाघवेनाख्यातस्य कृतावेव शक्तिस्वीकारात् । नचैव-
मुक्तलाघवेन कृतोपि कृतिः शक्यास्यात् न तु कर्त्ता शक्य इति वाच्यं ।
चैत्रः पचतीत्यादौ पाकानुकूलकृतिर्नामार्थत्वेन चैत्रेनाम्नार्थमभेदेना-
न्वयासंभवेनाभेदान्वयस्य बाधादसंभवे नानाप्रत्ययस्य कर्त्तरि शक्ति-
स्वीकारात् । न च कर्तृकरणयोस्तृतीयेति सूत्रेणानभिहिते कर्त्तरि तृतीया
विधानेन तंडुलं पचति चैत्र इत्यादौ तृतीयापत्याख्यातस्य कर्त्तर्येव शक्ति-
र्युक्तेति वाच्यं । कृत्यनभिधानस्यैव तृतीयानियामकत्वोपगमेनोक्ता-
पत्यभावात् । न चैवं चैत्रेण पच्यते तंडुल इत्यादावपि तृतीयायानुपप-
त्तिस्तत्राप्याख्यातेन कृत्यभिधानादिति वाच्यं कर्माख्यातस्य कर्मत्वाभि-
धायकत्वेन कृत्यनभिधायकत्वात् न चैवं चैत्रो गत इत्यादि कृदतस्थलेपि
तृतीयापत्तिः कृता कर्त्तुरभिधानेन कृत्यनभिधानादिति वाच्यं, विशेषण-

तया विशेष्यतया वा कृत्यनभिधानस्यैव तृतीयानियामकत्वात्

कृताविशेष्यतया कृत्यनभिधानेऽपि विशेषणतया तदभिधानेनोक्तप-

त्त्यभावात्। एवं विशेषणतया विशेष्यतया वा कर्मत्वानभिधानं द्वि-

तीयानियामकं एतेन कर्मानभिधानस्य द्वितीयानियामकत्वे चैत्रेण

पच्यते तंडुल इत्यत्र तंडुलपदोत्तरं द्वितीयापत्तिः कर्माख्यातस्य कर्मा-

भिधायकतया कर्मानभिधायकत्वात् कर्मत्वानभिधानस्य द्वितीयानि-

यामकत्वे चैत्रेण गतो ग्राम इत्यत्र ग्रामपदोत्तरं द्वितीयापत्तिः क्तः

कर्माभिधायकत्वेन कर्मत्वानभिधायकत्वादित्याशंका निराकृता क-

र्माख्यातस्य विशेष्यतया कर्मत्वाभिधायकतया कृतस्य विशेषणतया

कर्मत्वाभिधायकतयोभयत्रापि द्वितीयाभावोपपत्तेः नन्वेवमपि कृत

पूर्वीकटमित्यत्र क्त प्रत्ययेन कर्माभिधानात्कटमिति द्वितीयानुपपत्तिः।

अन्यथा कटः। कृतपूर्व इत्यत्रापि द्वितीयापत्तेः पूर्वं कटोऽनेन इति कृत-

पूर्वी देवदत्तः सपूर्वाच्चेति सूत्रेण सोपपदात्पूर्व शब्दात्कर्त्र्यर्थे इति

प्रत्यये कृतपूर्वीति सिद्धं यत्तु कृतं पूर्वमनेनेति कृतपूर्वीत्यत्र कृतमिति

भावक्तांतमविवक्षितकर्मकमेव पूर्वशब्देन समासः समासाद्यकर्तरि-

तद्वितं जनयित्वा कृतपूर्वीति शब्दं साधयति स च प्राक्कालिक कर्त्तृत्व

कर्त्तेति बोधसमर्थो वा तिष्ठते पश्चात् । भावक्तांत कृञर्थे च कटकर्मक-

त्वान्वय इति शाब्दिकैरुक्तं तदसत् कर्मयोगे निष्ठाप्रत्ययानुपपत्तेः क्त

प्रत्ययस्य भावार्थकत्वे कृञोऽविवक्षितकर्मतया पश्चादपि कर्मान्वया-

नुपपत्तिश्च अन्यथा भाव प्रत्ययांतगम्यर्थे ग्रामकर्मकत्वस्यान्वय-

संभवेन गतं गम्यते वा ग्रामामिति प्रयोगापत्तेः । अतएव पूर्वं कृतशब्दः

कर्मविशेषरूपक टान्वयम प्रतिपद्यमान एव कर्म सामान्य वाचक क्त

प्रत्ययांततया व्युत्पादितः पूर्वपदेन समस्यते पश्चात्कटं कृतवानिति-

वत् कटं कृतपूर्वीत्यत्रापि द्वितीयांतस्य कृञर्थेन्वयः क्तप्रत्ययेन

तस्यानभिधानाच्च द्वितीयोपपत्तिरिति नव्य शाब्दिक मतमपि परास्तं ।

तथा सत्युक्तरीत्या चैत्रेण पच्यते तंडुल इत्यादावपि द्वितीयापत्ते दुर्वा-

रत्वात् । न च प्रयोगानुरोधेनैव विवक्षायाः सत्वान्न दोष इति वाच्यं ।

प्रयोगानुरोधस्य प्रयोगान्यथानुपपत्ति निरूपतया तदन्यथोपप-

त्तेर्वक्ष्यमाणतया तदन्यथानुपपत्त्यभावात् यद्यपि कारकाणां प्रत्यया-

र्थभावनायामेवान्वयः न तु धात्वर्थे गुणानां च परार्थत्वादसंबंधः

समत्वात्स्यादिति न्यायात् कृतपूर्वीत्यत्र च भावना तद्धितार्थः स च कृति-
रेव तस्यामेव द्वितीयोपात्तकर्मत्वान्वयः कृतिवाचकतद्धितेन कर्मकारक-
स्यानुक्तत्वाच्च द्वितीयोपपत्तिरिति मीमांसकैरुक्तं तदप्यसत्। क्रिया-
भेदस्यैव कर्मभेदनियामकतया पदभेदेन तदभावात् कृतिमित्यत्रापि
क्तप्रत्ययेन तद्धितार्थभावनाकर्मणः एवाभिधानेन द्वितीयानुपप-
त्तेतादवस्थ्यात्। नहि तद्धितार्थस्य कृञर्थस्य वा कृतिरूपस्य भेदः।
सत्त्वात्सत्येनेन कृतमित्यत्र कर्तृत्वान्वयानुपपत्तेः किंच तद्धितार्थ-
भावनायां कारकान्वयस्वीकारे कृतपूर्वीत्यादाविव पूर्वीत्यत्रापि कर्मा-
न्वयप्रसंगः पूर्वादिनीति सूत्रे णापि कर्त्तर्येव इनेर्विधानात्।
तस्मात्कृतपूर्वी कटमित्यत्र द्वितीयानुपपत्तिर्दुरुद्धरैवेति चेदत्र प्राची-
नानुयायिनो नैयायिकाः कृतपूर्वी कटमित्यत्र क्तप्रत्ययेन कर्मणोऽभि-
धानेऽपि कटकर्मतादात्म्येन प्रतिपादयितुं शक्यते कृतकटपदार्थयोः
तादात्म्येनान्वये तंत्रस्य समानविभक्तिकत्वस्याभावात् सविशेषणस्य
कृतशब्दस्य वृत्त्यनुवेशानुपपत्तेश्च विशेषणानां वृत्तिर्नेत्यनुशा-
सनात् अतः कटत्वावच्छेदेन कृततादात्म्यान्वयबोधस्य कर्मार्थ द्वितीय

कृतपदेनानुपपादनात् कटपदसमभिव्याहारे च द्वितीयोत्पत्तौ बाध-

काभावः तथा च कृत पूर्वी कटमित्यत्र आङ्घ्यइति त्पत-

द्धितार्थः तत्र कृञ् धात्वर्थस्य प्रयत्नस्यान्वयः तत्र च क्त

प्रत्यय वाच्यम् कर्मत्वं विशेषणतयान्वेति वस्तुतु प्रविष्ट-

स्य कृतो धात्वर्थ विशेषण स्वार्थ बोधकत्वस्य व्युत्पत्ति

सिद्धत्वात् अतएव प्राप्तोदकोग्राम इत्यत्रोदकं तादात्म्येन

कर्त्री कर्त्ता च प्राप्तौ सा च बहुव्रीहि चरमावयव लक्ष्ये

कर्मण्यन्वेतीत्युदक कर्तृक प्राप्तिग्राम इत्यन्वय बोधः इत्थं

च कृत पूर्वी कटमित्यत्र प्राक् कालिक कटकर्मक सविषयक

कृत्याङ्यो देवदत्त इति शाब्दबोध इत्याहुः नव्यास्तु। कृत

पूर्वी कटमित्यत्र कृत्याङ्यत्वपः कर्त्ताइति त्पतद्धितस्यैवार्थः

कृतपदं च तद्धितार्थ शक्ति ग्राहकतयोपयुक्तं न तु कृति कर्मार्थकं

एवं च क्त प्रत्ययेन कर्मानभिधानान्नाद्वितीयायानुपपत्तिः तद्धिता-

र्थ कृतः कृ धात्वर्थ कृतेश्चोक्तरीत्यान्वयाभावेन तद्धितार्थ-

कृतौ कारककर्मकत्वान्वयेऽपि न कारकाणां धात्वर्थान्वय निय-
मभंगः कांत कृ धातोः तात्पर्यग्राहकतया तद्धितार्थकृतेः धा-
तु प्रयोज्यो पास्थिति विषयत्वरूप धात्वर्थत्वस्यापन पायादि-
ति प्राहुः। वस्तुतस्तु। अनभिधान पदार्थ पर्यालोचनायां कृतप्र-
वीत्यादौ न द्वितीया यानुपपत्तिः शंकापि तथाहि। यथाशक्-
तस्य कर्मत्वानभिधानस्य। द्वितीयानियामकत्वे ओदनः पक्त्वा
भुज्यत इत्यादौ कृताकर्मत्वानभिधानात् द्वितीयापत्तिः
न च कृदाख्याततद्धित समासान्यतमाभिहितत्व सामान्या
भावस्य द्वितीया नियामकत्वान्न दोषः,

~~धानात् द्वितीयापत्तिः नच कृदाख्याततद्धित समासान्यतमाभिहितत्व सामान्याभाव-~~

~~स्य द्वितीया नियामकत्वान्न दोषः~~ तत्र कृतार्कर्मत्वानभिधानेप्याख्यातेन तद-

भिधानादिति वाच्यं, तथासति भोक्तव्यमोदनं पचतीत्यादौ द्वितीयानुपपत्तेः

कृताकर्मत्वाभिधानात् । न च तत्र कृता भोजनकर्मत्वाभिधानेपि पाक-

कर्मत्वानभिधानान्न दोष इति वाच्यं ओदनः पक्त्वा भुज्यत इत्यादावपि तदन-

भिधानात् द्वितीयापत्तेरपरिहारात् , नच प्रधानक्रियानिरूपित कर्म-

त्वानभिधानमेव द्वितीयानियामकमिति वाच्यम्, तथापि चैत्रेण

दृश्यमानं घटं चैत्रो, पश्यतीत्यादौ द्वितीयानुपपत्तेः ज्ञानभेदेन वि-

षयताभेदेमानाभावेन चैत्रदर्शन मैत्रदर्शनोभयनिरूपित विषयत्व

रूपस्य कृताभिधानात् । तस्मात्प्रधानीभूत कृदाख्याताद्यन्यतमेना-

नभिधानमेवानभिधान पदार्थ इति वक्तव्यं अथवा तत्तत्प्रातिपदि-

कार्थ विशेषणतामात्रेण कर्मत्वाद्य विवक्षणमेव तदनभिधान पदा-

र्थः तत्प्रातिपदिकार्थ विशेष्य तया कर्मत्वादि विवक्षायां

द्वितीयादेः साधुत्वमिति पर्यवस्यति इत्थं च प्रधानीभूत त-

द्धित कर्मत्वानभिधानात्कद विशेष्यत्वेन कर्मत्वस्य विवक्षित-

त्वा

त्वाच्चन द्वितियानुपत्तिशङ्कालेशोपि, संभेदेनान्यतरस्यैवार्थ-
मिति न्यायेनैकस्यैव कर्मत्वस्य बोधकत्वात् न कृताद्वितीयान्यत-
रस्यैवार्थ्य नित्यसापेक्षत्वाच्चन सविशेषणकृतशब्दस्य वृत्त्यनुप्र-
वेशानुपपत्तिरपीतिसारं एतेन कर्तृकर्मणोः कृतीति सूत्रे
कृद्ग्रहणेन ज्ञापनेकृत पूर्वोकट मित्यादावभिहितेपिकर्मणि तद्बो-
धिकाविभक्तिमेवतीतितेन न द्वितीयानुपपत्तिः तथाहि उक्तज्ञापना-
नंगौरे सूत्रे कृद्ग्रहणं व्यर्थं तद्धित निडादि योगे षष्ठी व्यावृत्त्यर्थं न
लोकाव्ययेति सूत्रेण लादेशरूप तिङादियोगे षष्ठी निषधेन परि-
शेषादेव कृद्योगे षष्ठीविधि प्राप्तेः, नापि कृत पूर्वोकट मित्या-
दौ तद्धितयोगे षष्ठी व्यावृत्त्यर्थं कृद्योग षष्ठ्या अप्यनभिहिताधिका-
रीयत्वेन तत्र कर्मणः क्तप्रत्ययेनाभिहिततया षष्ठ्या अप्रसक्तत्वेन
तद्व्यावृत्त्यर्थक ग्रहणासंभवात् । उक्तज्ञापनांगाकारे तु कृताकर्माभि
धानेऽपि तद्धितयोगेन षष्ठ्याः प्रसक्त्यात तद्व्यावृत्त्यर्थं कृद्ग्रहण सा-
र्थक्यमिति केषांचित्प्रलपितमप्यपास्तं । उक्तरीत्या ज्ञापनं
विनैव द्वितीयोपपत्तौ कृद्ग्रहणस्य ज्ञापकत्वमा-

नाभावात् । उपदर्शितरीत्या कर्मणोऽनभिधान सत्वेनानभिहि-
ताधिकारीय षष्ट्याः प्रसक्त्या तद्वारणाय कृञ्ग्रहस्यावश्यकत-
या वैयर्थ्याभावेन ज्ञापकत्वासंभवाच्च व्यर्थं सज्ज्ञापयतीति न्याये-
न व्यर्थस्यैव ज्ञापकतया प्रकृते कृञ्ग्रहणस्योक्तरीत्या सा-
र्थक्यादित्यलं प्रसंगागत विचारवाहुल्येन अथाख्यातस्य
कृतौ शक्तिस्वीकारे संख्यावाचकत्वमफलं चैत्रः पचतीत्या-
दौ संख्याबोधस्योपपत्तेः संभवात् कर्तरि शक्तौ तूपचातित्यादौ
संख्याबोधानुरोधेन तत्सफलमिति चैत्रलक्षणया कर्तृबो-
धके पचन्तीत्यादौ संख्याबोधानुरोधेन कृति शक्तावपि तत्सा-
फल्यात्, न च संख्याविशिष्ठकर्त्तयैव लक्षणास्त्विति वाच्यं
विशिष्ठलक्षणा प्रतिसंधान विनापि तादृशान्वयबोधात् न च
कृति शक्तौ कृतिं पचतीति वाक्य योग्यतापत्तिः कृतावभेदेन पाकानु-
कूल कृति प्रकारक शाब्दस्य तद्वाक्यजन्यस्य संभवादिति वाच्यं,
आख्यातार्थकृतेर्भेदेनान्वय बोधस्यैव साकांक्षत्वोपगमात्
एवं चवैयः पचतीत्यादौ पाकानुकूलकृति ... इत्याद्याका-

एकः प्रथमान्तार्थमुख्यविशेष्यकः शाब्दबोधः एयोगच्छतीत्यादौ

गत्याश्रयत्वमात्रप्रतीत्या आश्रयत्वे घटो नश्यतीत्यादौ प्रतियोगि-

त्वप्रतीत्या तत्राख्यातस्य निरूढलक्षणा, न चोभयत्र प्रयोगा-

दौ [illegible]था परीत्यमेव किं न स्यादिति वाच्यम्, तथा सति चैत्रो जा-

नातीति वद्घटो जानातीति प्रयोगवारणाय एयो गच्छतीत्यादिवत्प्र-

द्दा कालो गच्छतीत्यादि प्रयोगवारणाय तत्तत्संबंधावच्छिन्नाश्रय-

तानुकृति तदन्यवस्तुमात्रवृत्ति प्रतियोगित्वे च शक्तिकल्पने गौरवा-

पत्त्याकृतिशक्तिराश्रयत्वादौ लक्षणेत्यस्यैव सम्यक्त्वात्। न च विक्ल-

त्यादि फलानुकूलव्यापारमात्रस्य धात्वर्थतया कृतेरपि तदंतर्गतत्वे-

न कथमाख्यातार्थत्वमनन्यलभ्यस्यैव शब्दार्थत्वादिति वा-

च्यं। कृतित्वेनान्यलभ्यत्वाभावात् विक्लित्यनुकूलव्यापारानु-

कूलकृतेरनन्यलभ्यात्वाच्च। रूपादिपराद्वृत्ति फलकत्तेजः

संयोगादेरेव पचाद्यर्थतया कृतेर्धात्वर्थानंतर्गतत्वाच्च, अत-

एव स्वतंत्राः परमाणवः पच्येत इति प्रयोगः। यत्तु तथा सति

तेजस्संयोगानुकूलकृत्यभाववति प्रस्तावरानुकूलकृति प्रति-

पंचतीति प्रयोगगानापत्तिरिति तदसत् तदा जा परजावयनोद्देश्य

प्रयोगेण पचतीति प्रयोगाभावे इष्टापत्तेः प्रस्तावशानात एरसादि परा-

वृत्त्यर्थं मंगारेषु पुनः स्थापनेन प्रस्तावणानुकूलकृतेरपि रसादि परावृ-

त्ति फलकतेजस्संयोगानुकूलक्षतित्वाभ्युपगमेन पचतीति प्रयोगोप-

पत्तोश्च पच धातोः प्रस्तावणेलक्षणस्यैव तदानीयवतीति प्रयोगनि-

र्वाहाच्च वैयाकरणास्तु आख्यातार्थ आश्रयः आश्रयत्वंच संज्ञोपाधि-

रूपं शक्यतावच्छेदकं न चाश्रयस्य चैत्रादिपदलभ्यतया कथं तत्रा-

ख्यातशक्तिरिति वाच्यम्, आश्रयत्वेन तद लाभात् एवंच चैत्र पचती-

त्यादौ एक चैत्राश्रयिकपचि क्रिया इत्याकारकः शाब्दबोधः

आख्यातस्थले सर्वत्र क्रिया विशेष्यक शाब्दबोधस्यैवाभ्युपगमा-

त् तथैवानुभवात् अतएव मृगोधावतीत्यादौ मृगाभिन्नोश्च काश्रयि-

का धावन क्रियेत्याकारक क्रिया मुख्य विशेष्यक बोधः साधुः

पश्य मृगो धावतीत्यादौ मृगकर्तृक धावन क्रियाया एवंदृशि क्रियायां कर्म-

ता संबंधेनान्वयः एवमेव वाक्यार्थकर्मतोपपद्यते मृगोधावतीत्या-

दौ धावनानुकूल कृतिमान् मृग इत्याकारको नैयायिक सम्मतः प्रथ-

मांतार्थमुख्य विशेष्यको बोधस्तु न साधुः पश्यमृगोधावतीत्यादौ वा-

क्यार्थकर्मतानुपपत्तेः । तथा हि पश्य मृगो धावतीत्यादौ धाव-
नानुकूलकृतिविशिष्ट मृगस्य दृशि क्रियायां कर्मत्वापत्तौ द्वितीया-
पत्तिः । न चैवम् प्रथमासामानाधिकरण्यात् रात्यप्रसंगः तथा
च धावतं मृगपश्येति वाक्य प्रयोगः स्यात्, एवमपि द्वितीयाया-
दुर्वारत्वेन पश्यमृगोधावतीति वाक्यासंभवापत्तिः न च पश्येत-
त्तमितिकर्माध्याहार्य्य वाक्यभेद प्रसंगात् । उत्कटधावनक्रिया-
विशेषस्यैव दर्शनकर्म्मतयाऽन्वयस्य प्रतिपिपादयिषितत्वादध्याहारे-
ऽनन्वयापत्तिरित्याहुः अत्रेदं प्रतिभाति पश्यमृगोधावतीत्यादौ वाक्यार्थ
भूतस्य धावनानुकूलकृतिविशिष्ट मृगस्य कर्म्मता संबंधेनाऽन्वयः न चै-
व मृगपदोत्तरं द्वितीयापत्तिरिति वाच्यम् । अत्र वाक्यार्थस्यकर्म-
त्वेन मृग पदोत्तर द्वितीयापादनासंभवात् यत्र तु केवल मृगपदार्थ-
स्यकर्म्मत्वे तात्पर्य्यं तत्र मृगपदोत्तरं द्वितीयायाः साधुत्वात् न च
तथापि धावनानुकूलकृतिविशिष्टस्य मृगस्य नामार्थस्य धात्वर्थ-
दर्शने कर्म्मत्वेनान्वयः अन्यथा तदुलः पचतीत्यादौ तदुलादेर न-
भिकर्मता संबंधेन पाकेऽन्वयापत्तेरिति वाच्यं केवलनामार्थ-

स्यधात्वर्थे भेदेनान्वयानंगीकारात् । वाक्यार्थस्य धात्वर्थेऽभे-

देनान्वयांगीकारेऽक्षतिविरहात् । अतएवश्चत्वाममैतत्माहात्म्यं तथा-

चोत्पत्तय: शुभा: पराक्रमंच युद्धे पुजायते निर्भय: पुमान् । उत्पत्तप्रत्ययांत

पदोपस्थापितानांशुभत्व विशिष्टोतपत्तीनां भेदेन श्रवणेऽन्वय: संग

च्छते । एवंच तंडुल: पचतीत्यादौ तंडुलपदार्थस्य तंडुलपदरूपनामा-

र्थत्वेन धात्वर्थेन सह तस्य न साक्षादन्वयं बोध: । शुक्लतंडुल: पचती-

त्यादौ च शुक्लभिन्न तंडुलरूपवाक्यार्थस्य नामार्थत्वाभावेनान्व-

य बोधो निवाराध स्वेति । ननु तंडुल पचतीत्यादौ तंडुलस्य कर्मता

संबंधेन पाकादावन्वयबोधावारणाय विशेष्यता संबंधेन तंडुलपदजन्य

तंडुल प्रकारक शाब्दबोधं प्रति तंडुल पदोत्तर विभक्ति जन्योपस्थिते:

कारणत्वकल्पनात् कथतां विना शुक्लस्तंडुल: पचतीत्यादौ तंडुलपद-

जन्यान्वयबोध: । नच शुद्ध तंडुलत्वरूपेण तंडुलान्वयबोधे ताद्दशो-

पस्थिते: कारणत्वमिति वाच्यम् । शुक्लस्तंडुल: कर्मत्वमित्यादौ विभ-

क्तिजन्योपस्थिति विनापि कर्मत्वे शुक्लाभिन्न तंडुलत्व रूपेण तंडुला-

न्वयबोधापत्ते: शुद्ध तंडुलत्व प्रकारक तंडुल बोध एव विभक्तिजन्यो-

पस्थितेः कारणत्वकल्पनादिति चेन्न विशेष्यता संबंधेन तंडुल पदजन्य-
तंडुल कारक शाब्दबोधे विभक्ति जन्योपस्थिति प्रथमान्तशुद्धादिपद
समभिव्याहृत प्रथमांत तंडुल पदोत्तर पच्यादि धातु जन्योपस्थित्य-
न्यतरस्य कारणत्वकल्पनात् केचित्तु पश्य मृगो धावतीत्यादि वाक्योत्त-
रकर्मत्वोपस्थापकमितिपक्षमभ्याहृत्य सर्वत्र वाक्यार्थ कर्मस्थलेऽन्वय-
बोधः निपातव्यतिरिक्तनामार्थयोरेवान्वय बोधस्याव्युत्पन्नत्वेन नि-
पात भूत नि पदोपस्थापित कर्मत्वे मृगो धावतीत्याद्यर्थस्य धावन कर्तृ
मृगादेरन्वयबोधे बाधकाभावात् एवं निपातातिरिक्त नामार्थस्यैव
धात्वर्थे साक्षादन्वयबोधस्याव्युत्पन्न तथा इति पदोपस्थापित कर्म
त्वस्य धात्वर्थ दर्शनादौ साक्षादन्वयबोधस्यापि निराबाधना। न च
घटो न चंद्र इवेत्यादौ नञ पदेवापदाद्युपस्थापितार्थे घटपदचंद्रप-
दार्थयोर्भेदेनान्वय बोधदर्शनेन नामार्थयो भेदेनान्वयावोध व्युत्पत्ती-
नाम्नि निपातातिरिक्तत्व विशेषणस्यावश्यकत्वेपि नामार्थ धात्वर्थयो
र्भेदेनान्वया बोधव्युत्पत्तौ नाम्नि भार्थे तादृश विशेषणं किमर्थमिति
वाच्यं। नातिरात्रे षोडशिनं गृह्णातीत्यादौ निपातीभूतनञर्थेन सहधा-

त्वर्थान्वयबोधस्य सर्वसंमतत्वेन तत्रापि तद्विशेषणस्यावश्यक-
त्वात् अतएवाख्यातोत्तरकर्मत्वाद्युपस्थापिका प्रथमान्य विभक्ति
प्राचीनस्वीकृतेति धात्वर्थे तेषां कर्मत्वादि संबंधेनैवान्वयबोधोपपत्तेः न
चैवं पश्य चैत्रः पचतीत्यादौ वाक्यार्थकर्मस्थले ऽध्याहृतेतिपदोपस्थापि-
तकर्मतायामाख्यातार्थविशिष्ट चैत्रादेर्विधेयत्वेनान्वयबोधे कर्मत्वादौ
नामार्थस्योद्देश्यतयैवान्वय इति घटमानयेत्यादिस्थलेष्व प्रव्युत्पत्ति
भंग प्रसंग इति वाच्यम् । इति पद समभिव्याहारे तादृशव्युत्पत्ति संको-
चस्वीकारादित्याहुः अन्येतु अध्याहृतेति पदेनैव तादृश वाक्यार्थोपस्थि-
तिस्तादृश वाक्यं च तात्पर्यग्राहक इति पदोत्तर द्वितीयायाश्च कर्म-
त्वमर्थस्तावन्नैव विभक्त्यर्थद्वारा धात्वर्थनामार्थान्वबोधसंभवाद्वृत्या-
हुत्यान्वयबोधसंभवे तं भयमप्यसत् । वाक्यार्थकर्मस्थले इति पद-
ध्याहृत्यान्वयबोधस्वीकारे तंडुलः पचतीत्यादावपि इति पदमध्याहृत्यान्व-
यबोध संभवे तंडुलः पचति इत्युक्तस्तंडुलः पचतीत्यादौ सर्वत्र नामार्थधा-
त्वर्थयोः साक्षादन्वयबोधस्यैव स्वीकर्तुमुचितत्वात् । तस्मात्केवलनना-
मार्थस्य भेदेन धात्वर्थेन्वयस्या व्युत्पत्तावपि वाक्यार्थस्य धात्वर्थेभेदे-

नान्वयेन दोष इत्युक्तरीतिरेव समीचीना वस्तु विशिष्टस्यानतिरिक्त

तया वाक्यार्थस्यापि नामार्थतया तस्य धात्वर्थे भेदेनान्वयासंभवादु

क्तरीतिर्न सम्यगिति तदसत् । विशिष्टस्यातिरिक्तत्वेपि विशिष्टकेव

लप्रकारयोर्भेदात् । पश्चाद्दृश धातोरेव धावनकर्तृ मृगकर्म्मक दर्शनलक्ष

णा निरुक्त वाक्यं तात्पर्य्य ग्राहकम् न च निरुक्तदर्शने दृश धातोर्वृत्त

क्षणा यदान्तरस्यैवेत्यत्र किं नियामकमिति वाच्यं दृशि धातोर्निरुक्तदर्शने-

लक्षणायां तादात्म्यस्य शक्य संबन्धस्य लघुत्वात् पदांतरस्य लक्षणाया-

शक्य संबंधस्य गुरुत्वात् । अथवा दृश धातोर्मृगकर्तृकोत्कट धावनकर्मक-

दर्शने लक्षणा मृगो धावतीति वाक्यं तात्पर्य्य ग्राहकमिति पुज्येन चैतत्

अन्यथा जानामि सीता जनक प्रसूतेत्यादौ वैयाकरणानामप्य निर्वा-

हात् पचतिकल्पं पुरुषा इत्यादि प्रयोगस्य सर्वसिद्धनयोऽन्वआचार्यक-

ल्पा द्विजा इतिवत पचंतिकल्पाः पुरुषा इति प्रयोग प्रसंगः प्रकृत्यर्थ

स्यैपदपरिसमाप्तपाकर्तुः लिंग सख्यान्वययोग्यतया तिङपात्ताया इवसु

सुपात्ताया अपि वहुत्व संख्यायास्सु वुपात्तलिंगस्य च तत्रान्वये संभ-

वादिति प्रथममांतार्थ विशेष्यक वोधोपगमेन समंजसः क्रिया विशेष्य-

कबोधोपगमे तु तस्मालिंगसंख्यान्वयायोग्यत्वान्न दोष इति तत्रस्याद

यैकर्तुराख्यातार्थतावादिनां दोषः भावनानुधातूपात्तेव तिङुपात्तापि न लिंग

संख्यान्वययोग्येति साधुत्वार्थमेकवचनस्यैव सामान्येन प्रसक्तस्य चन्याय्यत्वा

त् । यत्तु भावप्रधानमाख्यातमिति निरुक्तेन भावशब्दार्थक्रियाप्राधान्ये-

ख्यात विशेष्यकबोधस्वीकारस्वीये योन्तु प्रथमान्तार्थविशेषक: उक्तनि-

रुक्तविरोधादिति तदपि न भावपदस्य भावयतीति व्युत्पत्तिकनिरुषभावना

परतयोक्तनिरुक्तेनाख्यातार्थेषु संख्यावर्तमानत्वादिकेषु भावनारूपा-

ख्यातार्थस्यैव धात्वर्थं प्रति प्राधान्य प्रतिपादनात् । सत्वप्रधानानिना

मानीत्युत्तरवाक्यगतप्रधानशब्दस्य वाचकपरतया भावप्रधानमा-

ख्यातमिति निरुक्तस्य कृतिवाचकमाख्यातमित्यर्थप्रतिपादकतयाविरो

धास्फुराच्च केचित्तु भावप्रधानमाख्यानामिति निरुक्तेनाख्यातार्थस्य धा-

त्वर्थरूपभावविशेष्यत्वं बोध्यते सत्वप्रधानानि नामानि इति निरुक्तेन च

नामार्थस्य लिंगसंख्यारूपसत्वविशेष्यत्वं बोध्यत इत्याहुः । ~~सर्वत्र~~

~~तथा हि क्रिया~~ तस्मात्प्रथमान्तार्थमुख्यविशेषकबोधांगीकारेन कोऽ-

पि दोषः प्रत्युत वैयाकरणाभिमतक्रियामुख्यविशेष्यकबोधस्वासमं-

जसः तथाहि। क्रिया विशेष्यक बोधोपगमे चैत्रः पचतीत्यादौ चै-
त्रभावनयोस्सर्वजन सिद्धस्योद्देश्य विधेयभावस्य भंगापत्तिः एवं चैत्रः
पाकभावनावान्नवेति संशयानुत्पादस्या निर्वाहः एवं प्रकृति प्रत्ययौ सहा-
र्थं ब्रूतस्तयोः प्रत्ययार्थस्य प्राधान्यमित्युत्सर्गलभ्यस्य धात्वर्थे प्रकृत्यर्थावि-
शेषणत्वस्य भंगापत्तिः सत्यादि गतौ प्रत्ययार्थे प्रकृत्यर्थो विशेषणमित्यस्योत्सर्ग-
स्याप्यनुग्रहस्यैवन्याय्यतयातत्परित्यागानौचित्यात्। किंच क्रियाविशे-
ष्यक बोधोपगमे कर्तृकर्मलकारयोर्बोधवैलक्षण्यानुपपत्तिः उभयत्रैव
क्रियाया विशेष्यत्वात्। यदि च कर्तृलकारे व्यापारविशेष्यकः कर्मल-
कारे च फल विशेष्यको बोधः पक्वस्तंडुल इत्याद्यनुरोधेन विशेषण
विशेष्यभाव विपर्यासस्यावश्यकत्वात् फलानुकूलव्यापारस्य
क्रियात्वेन फलस्यापि क्रियात्वात् क्रिया विशेष्यक बोध नियमो-
पीति विभाव्यते तथापि क्रिया विशेष्यकबोधाकारे क्रियायामाख्या-
तार्थाश्रयस्याधेयता संबंधेनैवान्यो वाच्यस्स च न संभवति चै-
त्रेण पचतीत्यादावनन्वयापत्तेः आधेयता संबंधस्य वृत्त्यनि-
यामकत्वाऽभाव प्रतियोगितावच्छेदकत्वा संभवेन तत्संभवेन तन्-

त्संबंधावच्छिन्न प्रतियोगिताकाभाव बोधासंभवात् । अपि च चैत्रः पचती-
त्यादौ पाकत्वावच्छेदेन चैत्राश्रयकत्वस्य बोधम पाकत्व सामानाधि-
करण्येनैव तदन्वयो वाच्यस्तथा च चैत्रादीपवत्यपि चैत्रो न पचतीत्यादे-
र्योग्यत्व प्रसंगः पाकत्व सामानाधिकरण्येन चैत्राश्रयकत्वाभावसत्त्वा-
त् । न च नञ्समभिव्याहाराभावे पाकत्व सामानाधिकरण्येन-
बोधोऽभ्युपेयते तत्समभिव्याहारे तु पाकत्वावच्छेदेन बोधाभ्युपगमा-
न्नोक्तदोष इति वाच्यं प्रतियोग्यभावान्वयस्य तुल्ययोगक्षेमतायाव्यव-
स्थापनेन नञ् सत्त्वासत्त्वयोः प्रकारभेदाश्रयणासंभवात् । एतेन नञ्समभिव्या-
हारे चैत्राश्रयकः पाकाभावः चैत्राश्रयक पाकाभाव इति बोधोपगमोऽपि-
निरस्तः क्रियामुख्य विशेष्यकबोध नियम भंगापत्तेश्च । अंत्ये अधिक-
रणाकांक्षापत्तेश्च । अथ भवन्मतेऽपि भूतले घट इत्यादौ भूतलवृत्तिर्घटा-
भाव इति बोधांगीकारात्प्रतियोग्यभावान्वययोर्न तुल्ययोगक्षेमत्वं जातौ
न सतेत्यादौ सत्तायामेकार्थ समवायेन जातिवृत्तितया जाति समवेतत्वस्याप्र-
प्रसिद्धा प्रथमांत मुख्य विशेष्यकबोधासंभवादिति चेत्र अतत्र समवेत-
त्वोपस्वरूपसंबंधरूप व्यधिकरणसंबंधावच्छिन्न प्रतियोगिताकजातिवृत्ति-

त्वाभावबोधोपगमेनास्मन्मतेऽदोषात् । मैथिलास्तु क्रियाप्राधान्यमतेप्रयाति

पुरुषस्तस्य चरणावभिवादयेत्यादौ अन्वयबोधानुपपत्तिः । सर्वनाम्नां प्रधान-

परामर्शकतया तच्छब्देन प्रधानीभूत प्रयाणादिक्रिया परामर्शात् । अस्मन्मते प्रधा-

नीभूत पुरुषादिपरामर्शेनानुमित्यभावादित्याहुः । नव्यास्तु वैयाकरणै-

रपि अनभिहितेकर्तरितृतीयेत्यनुशासनस्य कर्तृविशेष्यतया तत्प्रातिपदिकार्थे-

ऽविवक्षितेसति तत्प्रातिपदिकात् तृतीयैवेत्येवार्थो वाच्यः अन्यथा चैत्रेण पच्य-

त इत्यादौ कर्तुरनभिधानस्य दुर्वचत्वापत्तेः तथाहि न तावदवाचकत्वमनभि-

धानं लकारसामान्यस्यैव कर्तृवाचकत्वेन कर्मलकारस्य तदवाचकत्वा-

संभवात् कर्त्तारि यकोऽसत्वादेव चैत्रः पच्यते इत्यादि प्रयोगवारणे-

यगाद्यनुत्तरत्वस्य कर्तृवाचकतावच्छेदके गौरवेणानिवेशात् । नापि बोधकत्व-

चैत्रेण पच्यत इतिवाक्यस्य कर्तृविषयकस्वजन्यबोधजनकत्वेन तद्घटक-

सकलपदानामेव जनकतया लकारस्यापि तद्बोधकत्वानपायात् एवं

च क्रियाविशेष्यकबोधोपगमेन चैत्रः पचतीत्यादौ चैत्रस्य कर्तृवि-

शेष्यतयाऽविवक्षितत्वे चैत्रपदोत्तरं तृतीयापत्तिः प्रथमानुपपत्तिश्च प्रथमा-

त विशेष्यक बोधोपगमे च चैत्रस्य कर्तृविशेष्यतया विवक्षणात् तृतीयापत्ति-

रितिसएवो चित्तोन्नु क्रिया विशेष्यक बोध इति प्राहुः। एतेन चैत्रः पचती-
त्यादौ चैत्र निष्ठायाक भावनेत्याद्याकारको भावनामुख्य विशेष्यको बोधः
भावनायाः आख्यातार्थत्वादिति मीमांसक मतमपि परास्तं तन्मते युक्तं
दोषावारणात् तस्मात्प्रथमानार्थस्यैव विशेष्यत्वो वस्तुत स्तु नैयायिक
मते सर्वत्र प्रथमांतार्थ विशेष्यकस्य बोध इति न नियमः कैरप्यभिप्रेयु
कैस्तथाकलिखनाद निर्वाहाच्च। किंतु यथा संभवं तत्तद्विशेष्यकः अत-
एव पचतीत्यादौ प्रथमांत पदा समभिव्याहारे भावना विशेष्यको भावा-
ख्यातस्थले क्रिया विशेष्यक एव बोधो नैयायिकानां लीलावती प्रका-
श विवरणे लिख नदीधिति कृतां यद्यप्येतत् भवने मैत्रेण वपद्यतां तेमन-
मित्यादिना कर्मक एतत् गृहाधिकरणकपाकत्वावच्छेदन मैत्रा
न्यकर्तृकत्वा भाव एव कारण बोधयितुमशक्यः। शब्दात्ता दृप्येण पाक
स्यानुपास्थिते रिति शंका च संगच्छते एवं नकलंजम क्षयेदित्यादौ कलं-
जभक्षणं बलवदनिष्टानुवंधित्वाभाववदित्या दिबोधांगीकरणं मणिकृता
संगच्छते। यत्तु नकलंजमित्यादौ बलवद निष्टानुवंधित्वाभाववत्कलं
जभक्षणानुकूलकृतिमानिति प्रथमांतार्थ विशेष्यक बोध लिख

तत्तदसत् । तत्रप्रथमांतपदस्यैवाभावात् अध्याहारे प्रमाणाभावात् किं-
चन कलंजमित्यादि वाक्यस्य कलंजभक्षणे बलवदनिष्टानुबन्-
धित्वबोधद्वारा निवर्तकत्वस्य सर्वसिद्धस्यानुपपत्तिः भवन्मते कलं-
जभक्षणकर्तुः पुनर्निवर्तकत्वोपपत्तावपि कदापि येन कलंजभक्ष-
णं न कृतं तं प्रति निवर्तकत्वासंभवान तस्य कलंजभक्षणकर्तुः पुनर्नि-
वर्तकत्वोपपत्तावपि कदापि येन कलंजभक्षणं न कृतं तं प्रति निवर्त-
कत्वासंभवात् तस्य कलंजभक्षणानुकूलकृतेरप्रसिद्धेः अतएवोद्य आकाशं न-
पश्यति इत्यादि प्रयोगाणामप्युपपत्तिः अंधवृत्तित्वाकाशविषयकत्वान्-
मयाभावप्रकारकदर्शनविशेष्यकबोधसंभवात् आकाशविषयक-
दर्शनाभाववानंधइति प्रथमान्तार्थविशेष्यकबोधस्याप्रसिद्ध्याऽसंभ-
वात् । इत्थं च चैत्रः पचतीत्यादौ प्रथमान्तार्थविशेष्यकबोधेऽपि पश्य मृगो-
धावतीत्यादौ मृगकर्तृकधावनस्य विषयतया दर्शनान्वयेन क्रियाविशे-
ष्यकबोधांगीकारेऽपि बाधकाभावः विशेषण विशेष्यभावस्य तात्पर्य-
ग्रहमात्राधीनतया क्वचिद्धात्वर्थविशेष्यकान्वयबोधांगीकारे क्षतिविर-
हात् । अतएव पचति भवतीत्यादि प्रयोगानुपपत्तिरपि समाहिता तात्र पाकानु-

कुलकृतिर्भवतीत्यादिमात्रनार्विशेष्यकान्वयबोधार्गीकारादित्यारं

एतेन प्रथमान्तार्थविशेष्यक नियममभवद्भिः स्तूयते क इति प्रश्ने स्तोत्रं

मभितत् क्रियते इत्युत्तरस्य स्तोत्रविशेष्यकबोधजनकस्य प्रश्ननि-

वर्त्तकत्वानुपपत्तिः समान विशेष्यक बोधजनकत्तरस्यैव प्रश्ननिवर्त्तकत्वा-

त् । स्वयंग्राह्यो विवाह आहूयप्रत्कत्यादीयते स्वयमिति स्मृति वाक्यात् । आह्वा-

न पूर्वकस्वयं कन्यादानवाह्यो विवाह इत्यर्थलाभानुपपत्तिः क्रियाविशेष्या-

कबोधनियमवक्तस्यपक्षेऽनुपपत्त्यभावेऽपि प्रयाति पुरुषस्तस्य पादयोरभि-

वादयेत्यादौ तच्छब्दस्य पुरुषपरामर्षकत्वानुपपत्तिः तच्छब्दे गुणी-

भूतार्थापरामर्षकत्वस्यौत्सर्गिकत्वात् । अन्यथा दार्शितराजमातंगास्तर्य

वामातुरंगमाः चैत्रो ग्राममगमस्तत्र मैत्रः । किं कुरुते ह्युना चैत्रप्रजावनीयं मे-

त्वं तस्मै दहिकं वलमित्यादौ तच्छब्दस्य यथाक्रमं राजग्रामभ्रातृपराम-

र्षकत्वापत्तेः अतस्त्वानुमानं निरूप्यत इत्युपक्रम्य तच्चानुमितिरिति

तच्छब्देन निरूपणपरामर्षसंभवान् तत्र निरूपणीयेनुमान इति

व्याख्यातमभियुक्तैरिति तरस्यापांशकापिनिराकृतायथा संभवमुक्ता-

रीत्या क्रिया प्रथमातर्थ विशेष्यकबोधयोरुपगमेनोक्तानुपपत्त्यभावात्

अथवा प्रथमांतपदा समभिव्याहारे उक्तरीतिरेव तत्समभिव्याहारे चस्वेत्र-
प्रथमांतार्थ विशेष्यकबोध नियम स्वन चोक्तदोषः कः कुलीन इति प्रश्नस्य-
धन मितिाभिन्न विशिष्यकबोधकादप्युत्तरात्प्रश्न निवृत्या समान विशेष्यकबो-
धजनकोत्तरस्यैव प्रश्न निवर्त्तकत्वमिति नियमाभावात् । अन्यथा कश्च-
त्र इति प्रश्ने पाचक इति वत् पचतीत्युत्तरस्यापि समान विशेष्य-के-
कबोधजनकत्वेनैव प्रश्न निवर्त्तत्वे क्रिया विशेष्यकबोधनियमांगीकर्तृमते-प्य-
पगते। एवं ब्राह्मो विवाह इत्यादिस्मृतिवाक्यस्य तादृश कन्यादानं ब्राह्मो-
विवाह इति नार्थः। गांधर्वादिविवाह साधारणपापव हप्रापण इति धात्वनु-त
सारेण च वरनिष्ठकन्यां प्राप्त्यनुकूल विलक्षणव्यापारस्यैव विवाहतया कन्-
न्यादानस्य विवाहत्वाभावात् अतएव स्मृतौ विवाहस्याष्टधाविभागः सं-
गच्छते सामान्य धर्माक्रांतानां विशेषरूपेण प्रतिपादनस्यैव विभागत्वात् ।
किंतु एतत्पदार्थ यादृश विवाहात्मकन्याशयाहूय स्वपंदीयते कन्यास-त-
व्यापारो ब्राह्मो विवाह इत्येवार्थ इति न कोपि दोषः इह भवने मैत्रेणैव ने च-
मतं पक्षपत इत्यादावपि एव कारार्थ व्यवच्छेदस्य उभयत्वावच्छिन्नप्रतियोगि-
गिताकनया भोवापगमिनै तत्त्वनाधिकरण कपाकर्मत्वमैत्रान्य कर्तृक-र-

त्वोभयाभाववद्यत्रैमनमितिप्रथमान्तार्थ विशेषपकरवबोधःअथआका-
शंनपश्यतीत्यादावपितज्जर्थस्यवारद्वयंमानोपगमेनाकाशविषयिषयक-
त्वाभावव दर्शनाभाववानांध इति प्रथमांतार्थ विशेषपकरवबोधः चैत्र-
आकाशंनपश्यतीत्यादौचाकाशा विषयकत्वाभावव दर्शनवान् चैत्र इत्या-
द्याकारकस्वान्वयबोध इति न कोपि दोषः पश्यमृगोधावतीत्यादौ तुगति-
रुक्तैवेति युक्तमुत्पश्यामः स्वमुपमानादिना शक्तिग्रहो प्पसातिवाधक स्व
अतस्व पचातिपाककेर्त्तेति आख्यातेनकर्तृविवरणेपि नाख्यातस्यविवरणा-
त्कर्त्तरिशक्तिग्रहः तत्रान्यलभ्यत्वस्यैववाधकत्वात् । प्रथमातचैत्रादिपदादेव
कृत्याश्रयस्यचैत्रादेर्वाभात् उपमानादिनाशक्तियह प्रकारश्चान्यविस्तरेण
स्तीतिमत्रैवानुसंधेय इति ग्रन्थगौरवभिया नात्रप्रपंचितः शक्तिश्चमुख्या-
वृत्तिः लक्षणापिवृत्यंतरे तेन गंगायां घोष इत्यादौ गंगापदादे गंगातीरा-
दौ शक्तिविरहेपि गंगातीरवृत्तिघोष इत्यादिशाब्दबोधस्यनानुपपत्तिः ल-
क्षणयैवगंगापदादिना गंगातीरादेरुपास्थित्यातादृशबोधोपपत्तेः साच-
स्व शक्यसंबंधः स्वपद लाक्षणिक गंगापदादिपरं । अत्रेदं विचार्यते । गंगा-
पदादेस्तीरादौ शक्तिरेवस्तांवृत्यंतरकल्पनेगौरवात् । शक्तिग्राहकव्यवहार-

स्य मुख्य लक्ष्य साधारणत्वात् लाघवेन गंगापदादि निरूपित शक्ति ज्ञानज-

न्योपस्थितेरेव शाब्दधी हेतुत्वाच्च। यत्तु गंगादि पदस्य लक्षणीय नीरादि सह-

स्रार्थेषु प्रत्येक शक्तिः कल्प्यात उहार्थं वृद्धव्यवहारापेक्षा चेति लक्षणा-

कल्पनमेव युक्ता न च लक्षणायहार्थमपि वृद्धव्यवहारापेक्षावश्यकीति

वाच्यं गंगायां घोष इत्याद्याप्तवाक्यं श्रुत्वा तस्य प्रामाण्योपपादनार्थमे-

व स्वार्थ संबंधेनोपस्थितितीरबोधकत्वस्य कल्पनात्। न च तीरादि सहस्रे-

षु संयोग समवायादिनाना संबंधानां शाब्दबोध प्रयोजकत्वे गौरवमिति-

वाच्यं। अतिरिक्तायाः शक्तेस्तज्जन्य स्मृतेस्तत्र शाब्दहेतुत्वस्य च कल्प-

नापेक्षया क्लृप्तानां सम्बन्धानां प्रायास्तदधीन स्मृतेश्च शाब्दधीहेतुत्व कल्पन स्वला-

घवादिति तदसत्। गंगापदादेस्तीरादौ लक्षणां गकिर्तृ मते गंगायां घोष इ-

त्यादौ प्रत्येकं गंगास्तीरादिविषय भेदेनोपस्थितेकार्यकारण भावद्वयक-

ल्पनापत्त्या महागौरवात् तथाहि यत्र गंगायां घोष इत्यादौ गंगादापदेस्ती-

रादौ शक्तिभ्रमात शाब्दबोधस्तत्र तदनुरोधेन गंगापदादिजन्य नीराशाब्द-

बोधप्रतितीरादिविशेष्यक गंगादि शक्ति विषयक ज्ञानज-

न्योपस्थितेरेकः कार्यकारणभावः स्वं यत्र ताद्दश शक्ति ज्ञानाभावदशायां

गंगादिपदादेस्तीरादौ लक्षणाज्ञानात् शाब्दबोधस्तत्र तादृशशा-
ब्दबोधं प्रति तीरादि विशेष्यक गंगापदादिलक्षणाविषयकज्ञानज-
न्योपस्थितेरपरः कार्यकारणभाव इति तीरादि विषयभेदेन कार्यकार-
णभावद्वयकल्पने गौरवं, गंगापदादेस्तीरादौ शक्तिमेवोपगम्य लक्षणा
नंगीकर्तृमते च प्रथमकार्यकारणभावेनैव निर्वाह इति लाघवं स्फुटमे-
व, अत्र केचित्, लक्षणांगीकर्तृमतेऽपि प्रथमकार्यकारणभावेनै-
व निर्वाह इति न तन्मते गौरवं स्वशक्य संबंधात्मकलक्षणाज्ञानस्या-
प्यधिकं त्विति न्यायेन शक्ति विषयक तया तज्जन्योपस्थितेरपि
तादृशशक्ति विषयकज्ञान जन्योपस्थितित्वरूपकारणतावच्छे-
दकाक्रांतत्वात् । अथ यत्र गंगापदशक्यः प्रवाहस्तीरं च प्रत्येयमित्या
द्याकारक समूहालंबनात्मकज्ञान जन्या नीराद्युपस्थितिस्तत्र गंगा
पदजन्य नीरादिशाब्द बोधवारणाय तीरत्वाद्यवच्छिन्न विशे-
ष्यता निरूपित गंगापदादि शक्तिप्रकारताशालिज्ञानत्वावच्छिन्नज-
नकता निरूपित जन्यताश्रयोपस्थितिर्नैव कारणतावच्छे-
दका च गंगापद शक्य संबंधेतर मिथाकारकलक्ष[illegible]

ज्ञानस्य तीरत्वाद्यवच्छिन्न विशेष्यतानिरूपित शक्ति प्रकारता शा-
लित्वाभावेन तज्जन्योपस्थितिरूप कारणतावच्छेदकानाक्रांत तयाक-
पमेककारणतयालक्षणांगीकर्तृमते निर्वाह इति चेन्मैवं शक्ति प्रका-
रतायांतीरत्वाद्यवच्छिन्न विशेष्यता निरूपितत्व मनिवेश्यज्ञाने-
तीरत्वाद्यवच्छिन्न विशेष्यकत्वं निवेश्यैकैक कारणत्वांगीकारेऽनुक्तो-
क्त दोषः यत स्तादृशोपस्थिते गंगापदादिजन्य तीरादि
विषयकशाब्दबोधकत्वेन कार्यतावच्छेदकमपि तु तादृशोपस्थिति
विशिष्ट शाब्दत्वमेव एवं चोक्तस्थलेऽपदर्शित धर्माक्रांतः प्रवाहादिशा-
ब्दबोधो जायत एव नीरादिशब्दबोधत्वावच्छिन्नस्यात्वादक-
भावः तस्य कार्यतानवच्छेदकात्वादित्याहुस्तदसत् । तथापि
गंगापद शक्यभाववत्ति गंगापदशक्तिप्रकारकं गंगापद शक्य संबं-
धाभाववति गंगापद शक्य संबंध प्रकारकमिदं ज्ञानमित्याद्या-
कारकानेकप्रामाण्यज्ञानाभाव निवेशानुरोधेन गंगापदशक-
क्यभावाप्रकारकत्व गंगापद शक्य संबंधाभावा प्रकारकत्वादि-
रूप निश्चयत्वानिवेशानुरोधेन चशक्ति ज्ञानजन्योपस्थितौ

कार्यकारणभावद्वयस्यावश्यकत्वात् । एवं वृत्ति संसर्ग-
कपदप्रकारकार्थविशेष्यकज्ञानजन्योपस्थितेरेव शाब्दबो-
धजनकत्वोपगमेनोपस्थितिद्वयस्याप्येकरूपेण कारणत्वं
संभवत्येव तथाहि शक्तित्वावच्छिन्नसांसर्गिकविषयतानिरूपि-
तगंगापदादिनिष्ठप्रकारतानिरूपिततीरादिविशेष्यताशालिज्ञा-
नत्वेन गंगापदादिजन्यतीरादिविशेष्यकशाब्दबोधत्वावच्छि-
न्नं प्रति हेतुत्वं कल्प्यते शक्तिनिष्ठावच्छेदकतया पर्याप्तिः परं निवेश-
यते इत्थं च शक्तिसम्बन्धेन पदप्रकारकार्थविशेष्यकज्ञानस्ये-
व शक्यसंबंधे पदप्रकारकार्थ विशेष्यकज्ञानस्यापि अधिकं त्विति-
न्यायेन शक्ति संसर्गकत्वाविशेषात् तद्वयोरप्युक्तधर्माक्रान्तत्वात्
संग्रहः सुलभः संसर्गतावच्छेदकीयविषयतायामपि सांसर्गिक
विषयतात्वं तस्य सत्त्वात् ननु शक्यसंबंधेन पदप्रकारकज्ञा-
नस्य न शक्तित्वावच्छिन्नसांसर्गिकविषयताशालित्वं तथा सति शक्ति-
संबंधावच्छिन्नपदप्रतियोगिताकाभाववानर्थ इति बाधनिश्चयोत्तर-
मपि शक्यसंबंधसंबंधावच्छिन्नपदप्रकारकार्थविशेष्यकबोधस्या-

दुर्वारत्वात् । तत्संबंधावच्छिन्न प्रतियोगिता संबंधावच्छिन्न यत्पद प्रकार -

ता निरूपिताभाव प्रकारतानिरूपित पदार्थ निष्ठविशेष्यताशाली ग्रहस्त-

ष्ठ सांसर्गिक विषयता शाली ग्रहोन जायते इत्यंचतदनुसारेणप्रति बंध-

कत्वस्य कल्पनीयतया पद निष्ठ प्रकारता निरूपिताया अर्थ निष्ठ

विशेष्यतान्निरूपिताया शक्ति निष्ठ सांसर्गिक विषयतातच्छालिज्ञा-

नं प्रति शक्ति संबंधावच्छिन्न प्रतियोगिताकपदाभाव प्रकारता निरूपि-

तार्थ निष्ठ विशेष्यताशालि निश्चयस्य प्रतिबंधकतया शक्ति संबंधा-

वच्छिन्न प्रतियोगिताक पदाभावप्रकारताशालि निश्चयसत्वे शक्य संबंधा-

वच्छिन्न पद प्रकारताशालिज्ञानस्य नानुपपत्तिः तत्र शक्ति निष्ठाया-

सांसर्गिकी विषयतातस्याः पद निष्ठप्रकारता निरूपित त्वे सत्यर्थनि-

ष्ठ विशेष्यता निरूपितत्वाभावात् शक्ति निष्ठ सांसर्गिकवि षयतायाःप-

दनिष्ठ प्रकारता निरूपित त्वे ऽर्थनिष्ठ विशेष्यता निरूपितत्वाभावात् मयो-

क्तरीत्यैककार्यकारणभावकल्पने शक्त्यभाव संबंधेन पद प्रकारकार्थ-

विशेष्यक ज्ञान जन्योपस्थितितः शक्य संबंधाभावसंबंधेन पद प्रकारका-

र्थ विशेष्यक ज्ञान जन्योपस्थितितश्च शाब्दबोधापत्तिर्दुर्वारैतितद्-

वाच्यं ।

शक्तित्वावच्छिन्नसांसर्गिकविषयतायांप्रति योगितावच्छेदकतावच्छिन्न-

त्वस्यापि निवेशनीयत्वादित्यपिपरास्तं । शक्तिकालीनत्व शक्तितादात्म्या-

दि संसर्गक पदप्रकारक ज्ञान जन्योपस्थिति वारणाय पद प्रकारत्वार्थ-

विशेष्यतोभय निरूपितत्वस्य शक्तित्वावच्छिन्न सांसर्गिक विषयता-

यं निवेशस्यावश्यकतया लक्षणज्ञान जन्योपस्थितेः । संग्रहासंभवाच्च ।

अत्रोच्यते । तीरत्वाद्यवच्छिन्न विशेष्यता निरूपिताया सांसर्गिकविष-

यतातन्निरूपिताया निरूपितत्व संबंधावच्छिन्ना श्रय निष्ठ सांसर्गिक-

विषयतातद्भिन्न सांसर्गिक विषयताया अनिरूपितायाशक्तित्वावच्छि-

न्न सांसर्गिक विषयतातन्निरूपितायां गंगादि पद निष्ठ प्रकारतातन्निरूपित-

तीरत्वाद्यवच्छिन्न विशेष्यता शालि निश्चयत्वेन शक्ति ज्ञानशक्ति संबंधा-

तम कलक्षणाज्ञाने नुगम्यत जन्योपस्थितित्वेन गंगादि पद जन्य तीरत्वा-

द्यवच्छिन्न विषयक शाब्द बोधत्वावच्छिन्न प्रत्येकविध स्वशक्तिज्ञानल-

क्षणा ज्ञान जन्योपस्थित्योः कार्यकारणभावः कल्प्यत इति लक्षणानीक-

तृ मतेन गौरवावकाशः शक्तिकालीनत्व शक्ति तादात्म्यादि संसर्गकपद-

प्रकारक ज्ञानीय शक्तित्वावच्छिन्न सांसर्गिक विषयतायां तादृश विषयताभिन्न-

कालीनत्वादि विषयतानिरूपित निरूपितत्वेन तादृश ज्ञानस्योपदर्शितानुगमकरूपाना-

क्रान्ततयाऽजन्योपस्थितेर्वारणं न चोपदर्शितरीत्याद्विविधाप्रामाण्यग्रहाभाव निवेशा-

नुरोधेनोपस्थितेः कारणताद्वयमावश्यकमिति वाच्यं शक्तिसंबन्धावच्छिन्नप्रतियो-

गिताकगंगादिपदाभाववद्विशेष्यतानिरूपितत्व प्रकारतानिरूपित शक्तिसंबंधा-

वच्छिन्नगंगादिपद प्रकारतानिष्ठ विशेष्यता संबंधावच्छिन्नप्र-

तियोगिताकस्य लक्षणासंबंधावच्छिन्न प्रतियोगिताक गंगादिप-

दाभाववद्विशेष्यतानिरूपितत्व प्रकारतानिरूपित लक्षणा संबंधा-

वच्छिन्न गंगादिपद प्रकारतानिष्ठ विशेष्यता संबंधावच्छिन्नप्रति-

योगिताकस्य चाप्रामाण्यज्ञानाभावस्य गंगादिपद निष्ठ प्रकारतायां नि-

वेशेनानुपपत्त्यभावात् । नच तथापि शक्तिसंबंधावच्छिन्नगं-

गादिपदप्रतियोगिताकाभावाप्रकारकत्व लक्षणा संबंधावच्छिन्नगंगा-

दिपद प्रतियोगिताकाभावाप्रकारकत्वरूपद्विविध निश्चयत्व

निवेशानुरोधेन कारणताद्वयमावश्यकमिति वाच्यं । संशयसमुच्च-

ययोर्वैलक्षण्यानुरोधेन संशयेनुभयप्रकारतानिरूपितैक विशेष्य-

तास्वीकारेणाभावप्रकारत्वा निरुपितायान्निष्ठ प्रकारतानिरुपि-
त विशेष्यतातच्छ्रान्तित्वस्यैव निश्चयत्वरुपतयातीरत्वाद्यवच्छि-
न्न विशेष्यतायामभावप्रकारत्वा निरुपितत्व निवेशेनोक्तरुपद्वि-
विध निश्चयत्वानिवेशात् न चैवमपि शक्य निरुपितपरंपरा संवंध-
रुप लक्षणासंवंधेन गंगादि पद प्रकारकज्ञानस्या संग्रहाच्चजन्योप-
स्थितेरसंग्रह इति वाच्यं, तादृशज्ञान जन्योपास्थितेः स्वातंत्र्येणै-
वकारणत्वोपगमात् । न चैवं लक्षणांगिकर्तृमते स्वतप्रयुक्तगौरवंदु-
र्वारमिति वाच्यं अनंत विषयेषु अतिरिक्त शक्त्यादिकल्पनापेक्षयाक-
तिपयै तादृशकारणताकल्पनेपि लाघवानापायात् । वस्कतस्कमु-
ख्यार्थत्वव्यवहारानुरोधेन लक्षणांगीकारावश्यकः शक्यत्वलक्ष्य-
त्वातिरिक्तयोर्मुख्यत्वामुख्यत्वयोर्दुर्वचत्वात् । किंच मुख्यार्थान्वयानु-
पपत्तिमनपेक्ष्यैव गंगादि पदात्प्रवाहादि वोधस्तामपेक्ष्यैवनस्मा-
त्तीरादिवोध इति वैरुप्य निर्वाहाय लक्षणांगिकार आवश्यकः, त-
दंगीकारे शक्यार्थवोधे नुक्तानुपपत्तेरनपेक्षा लक्ष्यार्थ[illegible]धेत-
स्या अपेक्षेति सुवचत्वात् । अपि च तीरादिनां तीरादिश[illegible]ति-

पादनेन शैत्यपावनादि प्रतीतिर्गंगादि शब्दैः प्रतिपादने तु भवति तत्प्रती-
तिरिति सर्वजनासिद्धस्यानुभवस्य लक्षणानंगीकारेन निर्वाहः तद्गंगीक-
रैतुस्नायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयुंजामहे इति न्यायेन तीरादि-
वाचकतीरादिशब्दं विहायावाचकगंगादिपद प्रयोगस्य किं प्रयोजन-
मिति प्रतिसंधानेन तादृश प्रयोग प्रयोजनानुपपत्या गंगादिशब्दैस्ती-
रादि प्रतिपादने भवति शैत्यपावनत्वादि प्रतीत्युपपत्तिः इत्यन्यथानुपपत्या-
शक्तिज्ञान लक्षणाज्ञान जन्योपस्थित्योः कारणताद्वयमुपेयं प्रामाणि-
कगौरवस्यादोषत्वात् न चैवं परस्परजन्यबोधे परस्परस्य व्यभिचार
इति वाच्यं, स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वस्व सामानाधिकरण्योभय
संबंधेन तदुपस्थिति वैशिष्टस्य तत्तदुपस्थिति जन्यतावच्छेदककोटौ
निवेशेन व्यभिचाराभावादिति संक्षेपः। अत्र प्राचः लक्षितलक्षणापि
वृत्यंतरं तथाहि। द्विरेफे गुंजतीत्यादौ द्विरेफपदाद्भ्रमरबोधस्यर्वसिद्ध-
स्सचन द्विरेफपदशक्त्या तस्य बहुब्रीहि समासात्मकतया शक्त्या-
भावात्। अतस्तव लक्षणयापि तस्मात तात्पर्य ग्राहक द्विशब्दसमभि-
व्याहृतरेफशब्देन द्वौ रेफौ यत्रेति व्युत्पत्या रेफद्वयसंबंधित्वेन भ्रमरपदं लक्ष्य-

क्ष्यते लक्षितेन च भ्रमरपदेन तादात्म्यरूपस्वशक्यसंबंधेन भ्र-
मररूपार्थो लक्ष्यत इति द्विरेफपदस्य भ्रमरे लक्षितलक्षणारूपवृत्त्यंतरं।
अथ द्विरेफपदलक्ष्यभ्रमरपदेन शक्त्यैव भ्रमरबोधसंभवे भ्रमरपदस्य-
न भ्रमरे लक्षणा न च रेफद्वयसंबंधित्वेन भ्रमरपदज्ञानेपि भ्रमेत्तरल-
रूपभ्रमरपदत्वावच्छिन्नाज्ञानात्कथं शक्त्या बोधः शक्ततावच्छेदकं
प्रकारकज्ञानाभावादिति वाच्यं, भ्रमरपदत्वावच्छिन्ने रेफद्वय-
संबंधित्वग्रहे भ्रमरपदत्वावच्छिन्नज्ञानसत्वादिचेन्न। प्रकृत्य
प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमेन भ्रमर-
स्य भ्रमरपदार्थत्वात् द्विरेफपदार्थत्वाभावेन तत्र विभक्त्यर्थान्व-
यानुपपत्तेः मममते च द्विरेफपदस्यैव लाक्षिततल्लक्षणा
वृत्तितया भ्रमरस्य द्विरेफपदार्थत्वानुपपत्तिः न च शक्या-
दन्येन रूपेण ज्ञाने भवति लक्ष्येणेति भ्रमरपदशक्यतावच्छे-
दकस्य भ्रमरत्वस्य कथं भ्रमरपदलक्ष्यतावच्छेदकत्वेश-
क्त्यैव तद्बोधसम्भवादिति वाच्यं। शक्येन रूपेण लक्ष्य-
ज्ञानांगीकारे शक्त्यैव तद्बोधसंभवे लक्षणाकल्पनमफलमित्यस्य

वर्जितया प्रकृते भ्रमर पदशक्य ( पार्थ लक्ष्य भ्रमरत्व विशिष्टस्य

बोधस्वीकारे भ्रमरस्य । द्विरेफपदार्थत्वा भावेन विभक्त्यर्थान्वयानुप-

पत्त्या शक्यस्यापि लक्षणयैव भानमुपेयते । एवं च लक्षितस्य द्विरेफ

पदेन लक्षितस्य भ्रमरपदस्य लक्षणा लक्षितलक्षणा सा च द्विरेफपद-

स्य वृत्तिरिति वदन्ति तदसत् । द्विरेफपदलक्ष्य भ्रमर पदेन शक्त्यैव,

भ्रमरबोधसंभवे तस्य लक्षणाया असंभवे तल्लक्षितशक्तेरेव वृत्तित्वा

चित्यात् भवन्मते लक्षित लक्षणाया इव मन्मते लक्षित शक्तेरपि

द्विरेफपदस्यैव वृत्तितया भ्रमरस्य द्विरेफ पदार्थत्व संभवान्न तत्र विभक्त्यर्था

न्वयानुपपत्तेरभावात् । अन्ये तु द्विरेफपदलक्ष्यभ्रमरपदेन शक्त्यैव भ्रमरबो-

धेपि लक्षित लक्षणाया वृत्तित्वं निर्वहति लक्षितेन लक्षणं बोधनं तादात्म्येन प-

रस्यामिति व्युत्पत्त्या द्विरेफ पद लक्षितेन भ्रमर पदेन शक्त्या बोधस्यैव लक्षित-

लक्षणात्वादित्याहुः । मिश्रास्तु शक्य संबंधो हि लक्षणा न तु शक्यस्य

लक्ष्ये साक्षात्संबंध एव गौरवात् । एवं च परंपरा संबंधेन लक्षणे वल्लक्षित

(पद घटित लक्षणा सेतीति तु यावत् तथा च परंपरासंबन्धेन लक्षणाया एवतया तेन द्विरेफपदस्य स्वलक्ष्य

लक्षणास्वलक्ष्य भ्रमर पदोपस्थाप्यत्वरूपेण स्वलक्ष्यभ्रमरपद घटित-

परंपरासम्बंधेन भ्रमरत्व रूपेण भ्रमररूपार्थोपस्थापकत्व संभवात् द्विरेफप-

दलक्षणयैवोपपत्तेर्नातिरिक्तवृत्ति कल्पनं न च यत्र द्विरेफपदस्य-
भ्रमरेऽनुपदर्शित परंपरा संबंधेन गृहीतः । किन्तु द्विरेफपद लक्षणयोपस्थि-
तस्य भ्रमर पदस्यैव तादात्म्यरूपः स्वशक्य संबंधो गृहीतस्तत्र द्विरेफपद
लक्षणया भ्रमर शाब्दबोधासंभवेनत्लाक्षितलक्षणा रुपवृत्त्यंतमावश्यकमि-
ति वाच्यं । तत्रापि द्विरेफपद लक्षणयोपस्थितस्य भ्रमर पदस्य भ्रमरे तादा-
त्म्य रुपस्वशक्य संबन्धग्रहे द्विरेफ पदस्य भ्रमरे उपदर्शित परंपरारुपस्व
शक्यसंबंधग्रहेऽपि बाधकाभावात् । न च यत्र भ्रमरे द्विरेफ पदस्यो-
पदर्शित परंपरा संबंधेन बाधनिश्चयस्तत्र तादृश ग्रहो न भवतीति-
वाच्यं । लक्षणा संबंधेन बाधनिश्चयस्य लक्षणा प्रकारक ज्ञाने
ऽविरोधित्वात् । न च यत्र लक्षणाया स्ववाधनिश्चयस्तत्र
लक्षणा प्रकारक ज्ञानमपि न संभवतीति वाच्यं । तत्रापि लक्ष-
णायाबाधग्रहस्य लक्षणा संसर्गक ज्ञाना विरोधितया लक्ष-
णा संसर्गकज्ञाने बाधकाभावात् न च वृत्ति प्रकारक ज्ञानस्यैव
शाब्दबोधहेतुतया तदकिंचित्करमिति वाच्यं । वृत्तिप्रकारकज्ञा-
स्येव वृत्ति संसर्गक ज्ञानस्यापि शाब्दबोधहेतुत्वोपगमादितिप्रा-
हुः नवीनास्तु ।

~~[illegible]~~ । द्विरेफ पदादुपदर्शित परंपरा संबंधेन भ्रमरत्व वर्बरत्व स्तस्तरत्व प्रस्तरत्व घर्घरत्वादिनाऽ नियमोपस्थितौतस्य भ्रमरपर्यायत्वमनुपपन्न तस्मात परंपरा संबंधिरेफघटितपरेफपदस्यत्वेन लाक्षणारेफस्कदेशे द्विपदार्थस्याभेदान्वयी स्तुवा द्विपदस्यतात्पर्यग्राहकतयोक्त लक्षणयैव द्विरेफ संबंधी लक्ष्यः स च योगार्थ स्वयौगिकव्युत्पत्ति प्रयोज्यत्वात् सचप्रस्तराद्यावति प्रसक्त इति भ्रमरत्व विशिष्टे रुढिः तथा च द्विरेफ पदं योगरुढमेव पंकज लंबकर्णादिपदवदिति प्राहुरिति दिक। लक्षणा च द्विविधा जहत्स्वार्थाऽजहत्स्वार्था च तत्र जहत्स्वार्थायामितिव्युत्या स्वार्थो (विशेष्य) कान्वयबोधप्रयोजिका जहत्स्वार्था तदन्या त्वजहत्स्वार्था गंगायां घोष इत्यादावाद्या तत्र गंगातीरत्वेन तीरत्वेन तीरत्वेन वा गंगातीरलक्षणात् एतेन तत्र गंगाशब्दाने युगपद्वृत्तिद्वय विरोधापत्तिरिति परास्तं । गंगाशब्दस्य लक्ष्यतावच्छेदक विधया तीरत्वनद्भानात् युगपद्वृत्तिद्वय विरोधेमानाभावाच्च अजहत्-लक्ष्यतावच्छेदकेन लक्षणा गंगा तीरत्वादि विशिष्टे गंगापद-

लक्षणाग्रहेणतद्धर्म प्रकारकोपस्थिति: शाब्दबोधश्चेति
संप्रदाय: नव्यास्तुलक्ष्यतावच्छेदके पि लक्षणास्त्येव अन्यथा
शक्यतावच्छेदकेपिशक्तिर्नस्यात् लक्ष्यतावच्छेदकस्येव श-
क्तिं विनापि मानसंभवात् नचैवंतत्र शक्याननुगमासंभव इतिवा-
च्यं अकार्येण घटत्वादिना कार्याननुगमवद् शक्येनापि शक्याननुगमे-
बाधकाभावादित्याहु: काकेभ्योदधिरक्ष्यतामित्यादौ द्वितीयालक्षणा-
पुनर्द्विविधाप्रयोजनवतीति रूढा च । आद्या गंगायां घोष
इत्यादौ तत्र शैत्यपावनत्व विशेषादिबोधस्य प्रयोजनस्य
सत्वात् नीलोघटइत्यादौ नीलरूपादिशक्तस्य नीलपदादेर्नी-
लादिरूपवती द्वितीया लक्षणा बीजंतुतात्पर्य विषयान्वयानु-
पपत्तिर्नतु शक्यान्वयायोग्यंयष्टी: प्रवेशयेत्यादौ काकेभ्यो-
दधिरक्ष्यतामित्यत्रौचतदभावात तात्पर्य विषयस्य यष्टि
द्वारप्रवेशनस्य सत्तौ दधिरक्षणाबीजंतात्पर्यग्राहकतयावश्यक-
त्वात् । गंगायांघोष इत्यादाम वाक्यस्य प्रामाण्यापपा-
दनार्थमेव विनापितात्पर्यग्रहं मुख्यान्वयायोग्यत्वज्ञाने

वलक्षणाकल्पनाच्च । यष्टीः प्रवेशयेत्यादौ च तात्पर्य ज्ञान विषये-

भोक्त प्रवेशनादौ यष्ट्याद्यन्वयानुपपत्तिरस्त्येवेति प्राहुः । अन्ये तु दंडा-

द्यंगामुच्चारयेत्यादौ गोपदादेः स्वपरत्वलक्षणैव गोपदादि गवादावेव-

शक्यत्वेन गोपदादेर शक्यतया शाब्दबोध विषयत्वासंभवात् ।

यत्तु गामुच्चारयेत्यादौ अर्थोच्चारणासंभवेन विना शब्द विषयक-

त्व शाब्दबोधानुपपत्तेश्च गोपदादेर्गवादिपरमपि शक्ययेन

च लक्षणया निर्वाहः जवगडदश माहेत्यादौ स्वशक्याभावेन लक्ष-

णाया असंभवात् लक्षणाग्रहं विनापि शाब्दबोधाच्चेति शाब्दिकै-

रुक्तं तदसत् वृद्धात्मा इत्यादिन्यायेन जादि प्रत्येकवर्णानामेव द्विती-

यार्थान्वयेन तेषां चैकाक्षरकोषेण स्व स्वार्थे शक्ति सत्वेन तत्सं-

बंधेन स्वस्मिन् लक्षणासंभवात् लक्षणाया अग्रहे च शक्तिभ्रमाद्वे वस्तु-

तः स्वस्योपस्थित्या शाब्दबोध संभवात् । यदपि पदानामौत्सर्गि-

कमर्थपरत्वमेव तदभावे च स्वपरत्वां गामुच्चारयेत्यादौ वाच्या-

न्वयिनाधेन स्वपरत्वे च न हत्यपेक्षा तादात्म्यसंबंधादेव स्वस्मात् चो-

पस्थिति संभवादिति नैरुक्तं तदपि न प्रत्यक्षोपस्थित घटादेरप्र-

यता संबंधेनोपस्थितगगनादेश्च शाब्दबोधवारणाय वृत्ति-
ज्ञानजन्योपस्थितेरेव शाब्दबोधहेतुत्वेन वृत्त्यपेक्षापा आ-
वश्यकत्वात् । एतेन श्रोत्रप्रत्यक्षोपस्थितिस्वपरत्वमेव पदा-
नामुपस्थितार्थबोधकत्वस्यैव लाघवेन क्लृप्तत्वात् वृत्त्यपेक्षाया
गौरवेणाप्रवेशादित्यपि तेषां प्रलपितमपास्तं प्रत्ययानां प्रकृ-
त्यर्थान्वितस्वार्थपरत्वव्युत्पत्त्या गोपदादेर्गोपदार्थत्वाभावे-
न तत्र विभक्त्यर्थस्योच्चारणकर्मत्वादेरनन्वयप्रसंगाच्च ।
अन्यथा कथंचित्स्मृततीरादेरन्वयसंभवे लक्षणोच्छेदापत्तेः ।
किंच गामुच्चारयेत्यादौ विकृतं गां पदमेवोच्चारणकर्म स्यात्त-
त्व विकृतं गोपदं, विकृतस्यैव श्रोत्रप्रत्यक्षोपस्थितत्वात् । अ-
पिच एकं पदमुच्चारयेत्यादौ पदान्तरेणोच्चारणकर्मस्या-
त् किन्तु श्रोत्रप्रत्यक्षोपस्थितैकमित्यादिपदमेव, यत्तु वृत्ति-
ज्ञानजन्यपदार्थोपस्थितेः शाब्दबोधहेतुत्वेऽपि नगामुच्चार-
येत्यादौ गोपदादिशाब्दबोधानुपपत्तिः निरूपकताश्रयतान्य-
तरसंबंधेन वृत्तिज्ञानजन्यत्वस्यैव पदार्थोपस्थितावपेक्षित-

त्वेनाश्रयता संबंधेन गोपदादि शक्त्यैव गोपदादे रुपस्थितिसंभ-
वात्। गवादौ वृत्ति सत्वेपि तात्पर्य विरहाच्च शाब्दबोधः उच्चार-
येत्यादि समभिव्याहारेण गोपदादौ स्वपरत्व निर्णयात्। एते-
न गामुच्चारयेत्युक्ते विकृतस्यैवोच्चारणापत्तिः तादृशस्यैव श्रो-
त्रेणोपस्थितेः शब्दस्या प्रकृत्यर्थतयातत्र द्वितीयार्थान्वयापत्तिः
स्वस्यैव प्रत्यक्षेण शीघ्रमुपस्थित्या गौरस्तीत्यादावपि स्वपरत्वाप-
त्तिश्चेत्यादि परास्तं तात्पर्यवशात्तत्याऽविकृतस्यैव शब्दादुप-
स्थितेः न चैवं तात्पर्येणैव सर्व निर्वाहे वृत्ति मात्रोच्छेद इति वाच्यं।
तस्य शाब्द सामान्ये ऽहेतुतया क्वचिच्छाब्द बोधस्य प्रमात्वनि-
यामकत्वेन वृत्तिं विनाऽनिर्वाहादिति तदप्यसत्। तथा सतीश्वरस्य
शक्त्याश्रयत्व संबंधेन पदमात्रात्स्मृतौ शाब्दबोध प्रसंगात्। तात्प-
र्यस्योपस्थितौ प्रमात्वे चानियामकत्वाच्च प्रमात्वे विषयाबाध-
स्यैव नियामकत्वाच्च। नवीन शाब्दिकास्तु यथा संसर्गे वृत्तिवि-
रहेप्याकांक्षादिवशात्संसर्गस्य शाब्दबोधे भानं तथा शाब्द ज्ञान-
सामान्यसामग्र्यैव सर्वत्र शाब्दबोधे शब्दभानं शाब्द सामान्य

सामग्र्या एव शब्द भासकत्वकल्पनादिति गामुच्चारयेत्यादौ वृ-
त्तिं विनैव शब्द भानं एवं च प्रकारता विशेष्यतान्यतर संबंधे-
न पदभिन्न विषयक शाब्दबोध प्रत्येव वृत्त्या पदजन्य पदार्थो-
पस्थितेः कारणत्वं कल्प्यते प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थ
बोधकत्वमिति व्युत्पत्तौ प्रकृत्यर्थत्वं च प्रकृति जन्य बोध वि-
षयकत्व मिति गामुच्चारयेत्यादौ न कर्मत्वाद्यन्वयानुपपत्तिः
न च घटपदजन्य बोधे सकलपर्यायाणां भानापत्तिर्विनिग-
मकाभावादिति वाच्यं, तत्तत्पद बोधे तत्तत्पदज्ञान घटित
शाब्द सामग्र्या हेतुत्वेना दोषादित्याहुस्तदसत्। शाब्दसा-
मग्र्यां शब्द भासकत्व कल्पने मानाभावात् उपस्थितिजन्य-
तावच्छेदके पदभिन्न विषयकत्व निवेशे गौरवाच्च शाब्द
बोधे प्रकृतित्वेना जनकतया प्रकृतित्वेन प्रकृतिजन्यत्व वि-
वक्षणासंभवेन प्रकृतिजन्यबोधाविषयत्वस्यापि प्रसक्तत्वाच्च।
वस्तुतस्तु सर्वत्र शाब्द बोधे शब्दभानं सम्भवति। यत्किंचि-
द्विषयकानुमिति सामग्रीकाले घटादि शब्दे ज्ञया शाब्दबोधः

तत्र घटशब्दादि शाब्देच्छा विरहविशिष्ट भिन्न विषयकानुमिति सामग्री रूपप्रतिबंधकसत्वेन घटशब्दादि शाब्दबोधानुपपत्तेः ; न च तादृश सामग्री प्रतिबंधकतायां घटशब्दादिशाब्देच्छावच्छेदादिशाब्देच्छाया अभ्युत्तेजकत्वोपगमस्यैवानुपपत्तिरिति वाच्यं । तथा-सति तादृशानुमिति सामग्रीसत्वे घटादिशाब्देच्छा सत्वे घटादिशाब्द सामग्र्यसत्वे घटशब्दादिशाब्दबोधापत्तेः तादृशेच्छाविषयसिद्धा संभवे नेष्टापत्तेर संभवात् । तत्रादिच्छाभावकूटस्यैकत्र निवेशाभिप्रायो विशेष्यविशेषणभावे विनिगमना विरहेणानंतकार्यकारणभावकल्पना गौरवश्चेति न किंचिदेतत् । ननु शाब्दबोधे सद्दस्याभावेपर्यायादि प्रक्रमभंगस्य दोषत्वानुपपत्तिः। भिन्न प्रकारक प्रतीति जनकस्यतद्दूषकताबीजत्वेन मन्नमते पर्यायादिस्थले तद संभवादिति चेत्रयेन शब्देनोपक्रमस्तद्भिन्न शब्देनोपसंहारस्यैव रसापकर्षकतया च प्रकाराभाव प्रयोजकतया तत्र दूषकताबीजत्वात् अतएव नैकपदं द्विः प्रयोज्यं प्रायेणेति वामनसूत्रे प्रायेणेत्युक्तउदेति सविताताम्रस्ताम्र एवास्तमेतिचेत्यादानुद्देश्यप्रति-

निर्दिश्यस्य लेशव्दांतरोपादाने चमत्काराभावादिति तदाशयात् अ-

धिकमत्यत्र मुख्यमिति चेन्न शाब्दिकमते शाब्दबोधे शब्दमानोपगमेन घट-

त्वादिरूपेण विशिष्यगृहीतशक्तिकेभ्यो घटादिपदेभ्यः पदजातमुभयप्रका-

रको बोधः विशिष्याज्ञातार्थकनलराम्यादिपदेभ्यस्तु नलत्वादिधर्म-

मोऽनुपस्थितौ विशिष्यशक्तिग्रहासंभवेन सामान्यरूपेणोपस्थितव्यक्तौ

नलादिपदं क्वचित्शक्तं साधुपदत्वादिति सामान्यतोदृष्टानुमानेन नलादि-

पदवाच्यः कश्चिदर्थोऽस्तीत्याकारकात् शक्तिग्रहात् केवलव्यक्तिवि-

शेष्यकः केवलपदप्रकारको नलादिपदवाच्यः कश्चिदर्थ इत्याकारको

बोध इति वक्तुं शक्यते तच्च मतमुपदर्शितदोषदुष्टमिति नलरम्यादि-

पदेभ्यः कथं शाब्दबोधः यत्तु बुद्धिविषयतावच्छेदकत्वेनानुगतधर्मे-

ण निखिलधर्मविषयकसंस्कारस्य सामान्यप्रत्यासत्त्यधीनानु-

भवमूलकस्य सत्वेन बुद्धिविषयतावच्छेदकत्वांशे मोषदशायां

स्वरूपतो नलत्वादिप्रकारकं स्मरणं निराबाधमेवेति तन्मूलकश-

क्तिग्रहमूलकमेव स्वरूपतो नलत्वादिप्रकारकशाब्दज्ञानं भवि-

ष्यतीति किमनुपपन्नं । न च स्वरूपत त्प्रका-

एकानुभव संस्कारात्कस्मरणे तत्प्रकारयोर्हेतुत्वादनुपपत्तिरूपेवेति -

वाच्यं, जन्यताजनकतावच्छेदककोटौ स्वरूपत इत्यस्यानिवेशात्

नचैवं कदाचिज्जातिमानित्याकारकं कदाचिद्घट इत्याकारकं कदा-

चिज्जातिमान् घट इत्याकारक विलक्षणस्मरणमिति नियमानु-

पपत्तिरिति वाच्यं। उद्बोधकवैचित्र्यादेव तदुपपत्तेः स्वरूपतो घट-

त्वादिप्रकारकानुभवजनितसंस्कारवतो जातित्वादिना घटत्वा-

दि प्रकारकात् संस्कारात् कदापि स्वरूपतो घटत्वाद्यप्रकारक-

स्य जातिमानित्याकारकस्मरणस्योदयेन स्वरूपतस्तत्प्रकारक-

स्मृतौ तादृशानुभव संस्कारयोर्विशिष्य हेतुत्वेपि उद्बोधक विशे-

षविरहस्य तादृशस्मृतिविरहप्रयोजकताया आवश्यकत्वे स्वरूपत

इत्यत र्भाव्य तादृशहेतुताया अप्रामाणिकत्वात्। अथैवमुद्बो-

धकवैचित्र्यस्य नियामकत्वमुपेत्य तादृशहेतुताया अनुपगमे विशे-

ष्यविशेषणभावाशिष्युद्बोधक विशेषस्य नियामकत्वमुपेत्य प्रका-

रत्व विशेष्यत्वाततभावेण सामान्यतस्तद्विषयकस्मृतौ तद्विष-

कत्वेन संस्कारानुभवयोर्हेतुतापत्तिरिति चेन्न अनुगतोद्बो-

धकस्थले स्वरूपतस्तत्प्रकारकज्ञानाद्यसत्त्वे स्वरूपतस्तत्प्रकार-
कस्मरणापत्त्या तादृशहेतुत्वस्यावश्यकत्वादिति केचिदुक्तदृ-
सत् एवं हि व्यवहितचैत्रेऽपि चैत्रत्वजातीये शक्तिग्रहसंभवेन
तमेव चैत्रत्वेन पश्यन्पुरुषः तत्र चैत्रो नामामिति प्रतारकवाक्ये-
न चैत्रभेदं न गृह्णीयात् । प्रत्यक्षबाधात् चैत्रदृष्टाच चैत्रश-
ब्दांतयमतः स्मरेत् पदप्रवृत्तिनिमित्तविशिष्टपिंडप्रत्यक्षस्य
संज्ञासंस्कारनियतोद्बोधकत्वात् । अतएव हारिणोक्तं यत्सं-
ज्ञास्मरणतत्र न तदप्यनहेतुकं पिंडस्य हि दृष्टस्सत् संज्ञास्मार-
पितुक्रमइति । एवं न नलत्वादिसंसर्गकबोधानंतरमुपनीतनल-
त्वादिविशिष्टे शक्तिग्रहशाब्दबोधोदय उपपद्यते यद्वा नलत्वादिवि-
शिष्टगोचरा अनादयस्संस्काराः परंपरास्ते तदुद्बोधकवशादुद्बु-
ध्यंत इति नलत्वादिविशिष्टे शक्तिग्रहाद्यनुपपत्तिरित्यपि परास्त-
मिति चेदत्र केचित् नलादिपदं किंचिद्वाचकं साधुपदत्वादिति सा-
मान्यतोदृष्टानुमानेन जायमानानुमितिपक्षधर्मताबलान्नलादिवाच-
कत्वे विषयीकरोति विशिष्टप्रत्यक्षे विशेषणज्ञानहेतुत्वेऽपि वां

अनुमित्यादौ परामर्शादेरेव नियामकत्वोपगमादतो ननलत्वादि-

रूपेण शाब्दबोधानुपपत्तिरित्याहुः अन्येतु औत्प्रेक्षिक चित्रकरा-

दीनां स्वाप्निके च ज्ञाने सर्वेषामनुभूते च जाते स्वरूपेऽनुभवस्य-

सर्वानुभव साक्षिकत्वादुपनयस्य सगीभूत जाति प्रकारमुपनात् मा-

न क्वचिदुवगम्यते तथा नलादि पदादपि वाक्यार्थ बोधः संभवती-

त्याहुः वस्तुतस्तु। नलरामादिपदात्रनरामादि पदार्थत्वा-

दि प्रकारक एव शाब्दबोधो लक्षणया संभवति न च नलत्वा-

दिविशिष्टे शक्यग्रहात्स्व शक्य संबंध रूप लक्षणाग्रहोऽपि

न संभवतीति वाच्यं सामान्य रूपेण तत्रापि शक्तिग्रह सत्वात

वृत्ति संसर्गक ज्ञानस्यापि हेतुतया उक्तत्वेन लक्षणासंसर्गक

बोधे शक्ति ग्रहस्य नपेक्षणीयत्वाच्चेति सारं एवं राजपुरु-

ष इत्यादि समासेऽपि राजादि पद लक्षणयैव शाब्द बोधः राजा-

पुरुष इत्यादौ राजकीयः पुरुष इत्यादि शाब्द बोध कारणाय

नामार्थयो भेदेनान्वय बोधस्याव्युत्पन्नतया राज पुरुष

इत्यादि समासे लक्षणां विना राजकीयः पुरुष इत्यादि

शाब्दबोधासंभवात् एवंच राजादिपदस्यासमास राज-
संबंध्यादौ लक्षणा तस्यच्चाभेदेन पुरुषादावन्वय इति
यत्तु समर्थः पदविधिरिति सूत्रेणैकार्थीभाव रूप सामर्थ्ये
समास विधानेन राजपुरुषादि समुदायस्यैव राजकीय-
पुरुषादौ शक्तिरावश्यकीति समास शक्ति वादिभिः
शाब्दिकै रुक्तं तदसत् तेन सूत्रेणाकतंक्षादिवशात्परान्व-
यबोधकत्वात्मक व्यपेक्षा रूप सामर्थ्य एव समास विधानेन
समुदायशक्तौ मानाभावात् ।अतएै कार्थीभाव सामर्थ्यवादितो-
प्यव वैय्याकरणाः समासे एकार्थीभाव रूप सामर्थ्यानभ्य-
भ्युपगमेराजपुरुष इत्यादि समासैकदेश राजादि पदार्थे विशेषणान्वयो
दुर्वारः तथा च सुंदरस्य राजपुरुष इत्यादि प्रयोगप्रसंगः तथाहि राज-
पदोपस्थापितो राजास्व स्वामिभाव संसर्गेण भेदेनापि पुरुषे चेति
निपातस्यैव समासावयवस्यार्थो भेदेन प्राप्ति-प्रति पादकार्थेन्वेति हि
व्युत्पत्ति वैचित्र्यात् ।पदज्ञात्लुप्त षष्ठी स्मरण जन्य पदार्थोपस्थि-
ति सहकारेण विग्रह वाक्यादिवसमासादपि वाक्यार्थबोध इतिहि

व्यपेक्षावादिनां नैयायिकानां मतं तथा च विग्रह इवभुमपि वि-
भक्तिकदध्यादि पदार्थस्यदध्यादेरिवस्य समास घटक राजादिप-
दार्थस्यापि विशेषणयोगो दुरुद्धरः अथ सविशेषणानां वृत्तिर्नि-
वृत्तस्य वा विशेषणयो गो नेति वार्त्तिकात् सुन्दरस्य राज पुरुष-
इत्यादि प्रयोगो न साधुरिति चेत् पदार्थैकदेशे पदार्थान्तरस्यान्व-
येनाक्यम साधुपथा गौर्नित्य इत्यादावितिन्यायस्यैव वार्तिकमनूद्य
दकैनन्नु विधापकमत एव चैत्रस्य नप्तेत्यादावविवदेव त्तस्य गुरु-
कूल मित्यादावपि पदार्थैकदेशान्वयेपि वाक्य साधुता न्याय
सिद्धां ज्ञापयितुं भवति वै नित्य सापेक्षस्य समास इति वार्तिकमण-
नुवादकमेवापदाहुः वहना वृत्ति धर्माणांवचनैरेव साधने स्यान्महद्गौ-
र वन स्मादेकार्थीभाव आश्रित इति, संबंधि शब्द सापेक्षो
नित्यंस्सर्वस्समस्यते । वाक्यवत्साव्यपेक्षास्य वृत्तावपि न हीयत
इति चायेतु चैत्रस्यनप्तेत्यादावपि प्रकारीभूतजन्य जन्यत्वादि
संबंधेन महारिचैत्रादरन्वयः ननु पदार्थैकदेशे पुत्रादौ वहा
हहरिः समुदायेन संबंधो येषां गुरुकुलादिना स सम्प्रत्या वयवा-

वांस्तेनु पुज्य तेन ताद्वता संहेतिवर्णयति तन्मते द्वेवद त्तस्य गुरुकु-

लमित्यादावपि कुल स्वदेवदत्तादेरन्वयः ननु पुष्पवत्यापि सुवचे।

नन्वेकार्थीभावाभ्युपगमेऽपि द्वंद्वोपात्तस्यैकदेशत्वाभावात्तत्रय दुर्पान्त-

रान्वयादुर्वारस्तथा चान्वाच परस्पलोपि द्वन्द्व प्रसंग इति चेत्पुष्प-

वंतादि पदोपात्तेष चंद्रमसि शैत्यान्वयेन पुष्पवतौ शीता वित्यस्य-

साधुतावारणाय धर्मद्वयावच्छिन्नैक शक्तिमतः पदस्य स्वार्थैकु

देशान्वये सत्यसाधुत्वावधारणात्। अथ राजपुरुष इत्यादौ रा-

जपदं राज संबंधिलाक्षणिकं अन्यथा राज पदार्थस्य पुरुषे भेदेनान्व-

यो न स्यात्। नामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वात्। न च निया-

तस्थल इव समासेऽपि तादृश व्युत्पत्तिः। संकोचाय दोष इति वा-

च्यं। दृष्टान्तासिद्धा संकोचे मानाभावात्। न चैवं घटो न घटः चं-

द्र इव मुखमित्यादौ नञर्थे भेदे इवार्थे सादृश्ये च घट चन्द्रादेर्भेदेना-

न्वयो न स्यात् नस्याच्च नञाद्यर्थस्य पदार्थैकदेशत्वेन तत्रान्वय इति

वाच्यं। तत्रापि घटपदादेर्घट प्रतियोगिकादौ नञादेश्च

भेदादि मति लक्षणोपगमात्। नापि लुप्त पष्ठ्यो [illegible] हि,

षष्ठीलोपमजानतोपिबोधात् । अत एव तत्पुरुषस्य पूर्वपदलाक्षणिकतया कर्मधारयस्य च सर्वशक्ततया तद्भावेन तत्पुरुषात्कर्मधारयो लघीयानित्याशयेन । निषादस्थपत्यधिकरणसिद्धान्तोपि संगच्छते एवं च ममापि एकदेशान्वयमिष्यैव न सुन्दरस्य राजपुरुष इति प्रयोग इति सविशेषणानामित्यादिवार्त्तिकं विनैव निर्वाहः यत्तु राजपुरुष इत्यादौ पूर्वपदं राजसंबंधिनि लक्षणास्वीकारे अस्य कर्मधारयत्वापत्तिः । समानाधिकरणतत्पुरुषस्यैव कर्मधारयत्वात् । न च यत्र समास पूर्वदशायाम भेदान्वयस्तत्र कर्मधारयः यत्र च तद्दशायां भेदेनान्वयस्तत्र तत्पुरुष इति वाच्यं । नित्यसमासे विग्रहशून्यत्वेन तादृशतत्पुरुषकर्मधारययोरव्याप्तेः अलौकिकविग्रहस्य सत्वेपि तस्यान्वयबोधस्वरूपायोग्यत्वात् । न च समासात्पूर्वं यत्र तुल्यविभक्तित्वं तत्रैव कर्मधारयत्वमतो न तत्पुरुषस्य कर्मधारयत्वं तत्र समासात्पूर्वं विरुद्धविभक्तित्वादिति वाच्यम् पूर्वावस्थायाः समासार्थविवक्षानुसारेणैव कल्पतया नव समास वाक्ये बोधाविशेषेण तद्वैलक्ष-

रायकल्पताया अप्य संभवादिति तदसत् । यत्र समासघटकप-
दार्थस्य विशेष्यत्वे सति तद्घटकीभूत पदानां स्वोत्तर सुत्पत्ति
योग्यविभक्त्यर्थवदतभावेण लक्षणां विना सामानाधिकरण्यं
तत्रकर्मधारयत्वं तदन्तर्भावेण लक्षणया सामानाधिकरण्योपपत्तेस्तु तत्पु-
रुषत्व मिति विभाग संभवात् सत्यतेन च पंचमूलीत्यादि व्यावृत्ति-
रिति चेन्न तथापि समासस्थले समुदायशक्त्यनंगीकारे तत्रैकार्थी-
भावस्य स्वार्थवत्त्वाभावेन प्रातिपदिक संज्ञाप्राचीन विभक्तिलो-
पविभक्त्यंतरोत्पत्त्यादिक वृत्तिकार्यं न स्यात् न च समासस्य वि-
शिष्टैकार्थत्वाभावे नार्थवदादि सूत्रेण प्रातिपदिक संज्ञाया असं-
भवेपि कृत्तद्धित समासाश्चेति सूत्रांतरेणैव प्रातिपदिक संज्ञायास्स-
म्भवात्र दोष इति वाच्यं कृदादि सूत्रेऽप्यर्थवद्ग्रहणानुवृत्या तेना-
पि सूत्रेण तत्संज्ञाया असंभवात् अन्यथार्थवदादि सूत्रे ~~ग्रह~~
~~णमेव बहुपादमनात् कृत्तद्धितान्त~~ र्थवतां धातुप्रत्ययानोपर्यु-
दासबला देवार्थवत्त्वेलब्धे ऽप्यर्थवद्ग्रहणं स्यान्नयेक्य प्रसंगात् कृ-
दादि सूत्रेऽनुवृत्त्यर्थमेव तद्[illegible]जात् कृत्तद्धितान्तत्वाभाव कृत्तद्धितयो-

र्थवद्ग्रहणानुवृत्तेरावश्यकत्वाच्च । वस्तुतस्तु कृदादि सूत्रेण वि-
धायकं तथा सति कृद्ग्रहणे गतिकारकपूर्वकस्यापि ग्रहणमिति
न्यायेन मूलके नोपदशामित्यंत वाक्यग्रहणापत्तिः तद्धितग्रहणेन-
तद्धितान्त मात्रे प्रातिपदिक संज्ञा विधौ वदुगुड इत्यादौ तदभाव-
प्रसंगाश्च । न च तद्धिग्रहणेन तद्धितविशिष्टमेव गृह्यते न तद्धितां-
न्तमिति वाच्यं । तथा सति पचतकीत्यादि मध्यस्थिति तद्धि-
तकेपि प्रातिपदिक संज्ञापत्ते । इत्थं चार्थवदादि सूत्रेणैव प्राति-
पदिक संज्ञा विधायकं कृदादि सूत्रं तु प्रपंचमात्रं अर्थैकार्थीभावा-
भ्युपगमपक्षे वृत्ति मात्रस्यापि संग्रहात् सुबंत तिङन्तयोश्च व्या-
वर्तनात् प्रत्यांतपर्युदासः कृदादि सूत्र प्रपंचाश्चायुक्तः स्यात्
अतोऽर्थवत्त्वमर्थस्मारक वृत्तिमत्वमात्रं त्वपेक्षा साधारणं नि-
र्वाच्यं वृत्तिमद् विषयक प्रतीत्याविषय संज्ञासिद्धौ च सुबन्त तिङन्त-
योरप्यर्थवत्त्वात्तयोर्वाक्यस्य च प्रातिपदिक संज्ञावारणाय कृत्त-
द्धितेत्यादि नियम सूत्रं प्रकृति प्रत्यय समुदायस्य चेत् प्रातिपदिक
संज्ञा कृत्तद्धितांतयोरेव वाक्यस्य चेत् समासस्यैवेति, प्रत्ययांतयुदा-

सत्कनकर्त्तव्य एव प्रयोजनाभावात् । न च धातु पर्युदासतत् क्रि-
वंतधातोः प्रातिपदिक संज्ञानुपपत्तेर्निकुचित्रायास्तोदात्म्येनान्व-
न्वयाच्चित्रगौस्वामीत्यन्वयबोधोपपत्तिः एकपदोपात्तयोरपि प्रकृति-
वर्त्तमानत्वयोः परम्परान्वयबोधदर्शनेन प्रकृतेप्यनुपपत्यभावा-
दिति वाच्यं । प्रातिपदिकार्थयोर्गौस्वामीनोर्भेदेनान्वयबोधस्या-
व्युत्पन्नत्वात् । न चार्चिया पदगोपदयो रूपयोरपि बहुव्रीहिर्ज-
घन्य इति प्रवादः बहुव्रीहावुभयपदस्यैव लाक्षणिकत्वादिति वा-
च्यं, बहुव्रीहावेकशेषद्वंद्वान्यतरप्रसंगात् । समानरूपावच्छि-
न्नयोरभेदान्वयबोधस्याव्युत्पन्नत्वाच्च । यदि च क्वचिदेकदे-
शान्वयस्याषष्ठतया गोसंबंधिलाक्षणिकगोपदार्थैकदेशगवि-
चित्रापदार्थान्वयोनानुपपन्नः भिन्नाभ्यां प्रातिपदिकाभ्यामुपास्थितयो-
रेव न भेदेनान्वयबोधः एकप्रातिपदिकोपस्थितयोस्तु भवत्येव
वेति गोपदलक्ष्ये स्वामिनि गोपदशक्यगो भेदेनान्वयबोधोपग-
मे क्षति विरहादिति विभाव्यते तथाप्यषष्ठ्यर्थे बहुव्रीहौ प्रासादको-
ग्रामइत्यादौ त्यपेक्षारूप सामर्थ्योपगमेकधर्मापनाभिमतान्व-

यबोधनिर्वाहः, तथाहि प्राप्तो तेरुत्तरदेशोपहिकं कर्मक्तप्रत्य-

यस्यकर्त्तार्थः, तेन प्राधिकर्त्तृ प्राप्तपदार्थः। ~~उदक कर्तृक प्राप्ति~~

~~प्राप्तिक~~ उदकपदं चत्वन्मते जल संबधितिलाक्षणिकं तदेक

देशे जले प्राप्तस्य तादात्म्येनान्वयः न ह्येतावताप्युदक कर्तृक

प्राप्तिकर्म ग्रामं इत्यन्वयबोध निर्वाहः अभिमतश्च तादृश स्वा-

न्वयबोधः तस्माल्लोपे हृत्या रुप सामर्थ्योपगमेनानिर्वाहादि

कार्थमात्राद्धितेत्यादि सूत्रं विधायकमेवेति वाच्यं। काल्पनिक

विभक्त्यादि विशिष्टे राजनङः सपुरुषसु इत्य लौकिक प्रक्रिया

वाक्ये समास संज्ञेव काल्पनिक क्विवादिति विशिष्टे प्रातिपदि-

क संज्ञेत्यभ्युपगमात्। अन्यथा कृत्तद्धितेति सूत्रेणापि हुहृ

णानुपपत्तेः नचैवं ~~कामि~~ त्यादौ प्रत्येकवर्णानां प्राति

पदिक संज्ञातस्युक्तोनकारलोपश्च स्यादिति वाच्यं। वर्णा-

नां समुदायस्यार्थवत्त्वं प्रत्येकवर्णानां त्वावानाद्यः वृत्ति-

मद्घटितत्वस्वरूपार्थवत्त्वस्य तद्‌वयवेध्मावात् तादृशा

शाब्दबोधजनकपदार्थोपस्थितिजनकवृत्तेरधिकरणं यत्

मुदायस्तदविषयकप्रतीतिविषयत्वमर्थवत्वं नहि समुदा-
यावयवे प्रत्येकवर्णे विधमानपि वृत्तिपदार्थं स्मारयति तज्ज-
निता वा स्मृतिः शाब्दबोधमर्जयति मवतु वाऽखंड वृत्तिमत्समुदा-
यावयवानामनर्थकत्वमेव स्वीक्रियतां च पंकजादिपदे पंकजनि-
कर्तृपद्मत्वावच्छिन्ने विशिष्टे रुढिर्न ह्येतावता केवल यौगिके स-
मासे रुढिसिद्धिरिति चेन्न तथापि बहुव्रीहौ शक्तिकल्पनं विना
चित्रगुरित्यादौ चित्रगोः स्वामिनो बोधोपपादनमशक्यमेव-
न च गोपदस्य गोस्वामिति लक्षणया तल्लाभः पदार्थैकदेश-
गविचित्रादेरनन्वयप्रसंगात् नापि गोपदस्यैव चित्राभिन्नगो-
स्वामिति लक्षणा चित्रापदं तात्पर्यमात्रग्राहकमिति युक्तं । चि-
त्रगोपदयोर्व्यपेक्षास्वरूपसामर्थ्यस्याभावे समासानु-
पपत्तेः न च गोपदात् शक्त्या गोः लक्षणया स्वामिन उपस्थि-
तौ लक्ष्यार्थविशेषणीभूतायां गविरूपसामर्थ्यमुपेयन्तच्च-
समुदायशक्तिं विना न निर्वहतीति समासे शक्तिसिद्धिरिति वदन्ति
अत्रोच्यते प्राप्तोदको ग्राम इत्यादावषष्ठ्यर्थे बहुव्रीहौ स-
मुदायशक्तिं —

~~मुख्यार्थे~~ विनाप्यभिमतबोधस्संभवत्येव तथाहि तत्र प्रापि प्रकृतिक प्रत्य-

स्यकर्त्ताकर्मचार्थः उदकं तादात्म्येन कर्त्तारि स्व निरूपक तयाप्रा-

प्तौ साचकर्मणीत्येवं विशेषण विशेष्य भावव्यत्यास मात्रेणक्र-

प्तपदार्थैरेवोदक कर्तृक प्राप्तिकर्म ग्राम इत्यभिमत बोधो नि-

र्वाहयितुं शक्यते, न च विशेषण विशेष्यभाव व्यत्यासक-

ल्पने गौरवमिति वाच्यं, समुदायातिरिक्त शक्ति कल्पनमपे-

क्ष्य तत्कल्पन स्य लाघवात् किंच समासस्थले समुदाय-

शक्ति कल्पने शशश्रृंगंनास्तीत्यादौ शशश्रृंगपद समासानुप-

पत्तिः तत्र शशश्रृंगस्यालीक तया विशिष्टार्थे समुदायश-

क्तेरसंभवात् । अपिच यदि समासस्याखंडस्य शक्तिस्त-

दा तस्या अगृहीतायानो पयोग इति गृहीताया स्वोपयो-

गित्वं वाच्यं । न हि शशश्रृंगादि शब्दानाम पदार्थैस्स-

ह शक्तिरूपसंबंधग्रहस्संभवति । तथाहि परं बुद्धि विषयतयावि-

शेषत उपस्थिते ऽलीके शक्तिग्रहः सामान्यत उपस्थिते तत्रवा-

शक्तिग्रहः परंबुद्धि विषयतया विशेषत उपस्थितिरपि परन्तु

बुद्धेरूपकतया परबुद्धिनिरूपेणनावश्यवेद्यत्वात् व्यवहारवि-
शेषणपरनुद्धान्नुचीयमानायाबुद्धि विशेषणत्वेनोपास्थितत्वा-
द्धा। तन्नाद्यः परबुद्धेरुल्लेखो यदि प्रत्यक्षरूपः स्यात्तदा तस्मिन्नु
ल्लेखे विषयाप्युल्लिख्येत न ह्येवं, परबुद्धेरनुल्लेखात्। न द्वितीयः
नहि कश्चिदलिके व्यवहारोऽस्ति येनोचीयमानायां बुद्धौ विशेषणतया
विशेषतः शशशृङ्गादिभासेत। न च शब्दांतरोपस्थिते शशशृङ्गा
दौ शशशृङ्गादि पदसंकेतग्रह इति वाच्यं। पदान्तरस्याप्यगृहीत
संगतिकत्वेनाप्रतिपादकत्वात् न च शशशृङ्गादिशब्दः उच्चा-
रयितृतात्पर्यपूर्वकः वालप्युक्तादिभिन्नोच्चरितशब्दत्वादित्य-
नुमानेन सिद्धे तात्पर्ये तत्तात्पर्यं सविषयकमित्यनुमित्या गृहीतता-
त्पर्यविषये शशशृङ्गादिशब्दसंकेतग्रह इति सामान्यत उपास्थि
तिपक्षो युक्त इति वाच्यं। एतादृशसमयग्रहसंभवेपि तस्य शाब्दबो-
धानुपयोगित्वात्। नहि तात्पर्यविषयत्वोपलक्षिते धर्मिणि शक्ति
ग्रहः शाब्दबोधोपयोगी किंतु गोत्वादिविशिष्टे अन्यथा गौर्वधान
ति वाक्यात्तात्पर्यविषये सामान्यतो गृहीतसंकेतैः पदैरबाध

ताविशेष संगतिकानां शाब्दबुद्धि प्रसंगात् ननु विशेषांतरीभू-

त प्रवृत्ति निमित्तगोत्वादि धर्म विशिष्टेगवादौ गवादि पद शक्तिग्र-

हे गोत्वादिविशिष्टमेवबोधपत्ति शशशृंगादीनां तु निर्धर्मकाणां

शाब्द बोधो बुद्धि विषयत्वस्वरूपोपलक्षण धर्म मात्रं पुरस्कृत्य शक्ति ग्रह-

मपेक्षते तदुक्तं विशेषांतरविनाकृतः कल्पनामात्र विषयोस्य वाच्य इत्य-

तीति चेन्न एवं सति कूर्म रोम शशशृंग विकल्पयोरविशेष प्रसंगात्

नहि प्रवृत्ति निमित्तस्याभावे कूर्म रोम न शशशृंगपदार्थ इति वक्तुं शक्यं

किमपरं घटोपि भवतां मते ऽलीक इति सर्वेपि शब्दास्तन्मयमेव विकल्पं जन-

ये पुः पच्च सर्वेप्रति ~~प[illegible]ते अन्यथा क्वचिदपि व्याकरणाच्छक्ति निर्ण-~~

~~यासं~~ चारः स्वस्व वासनातो गृहीत शशशृंगशब्दादि संगतिकाइ-

तितदसत्। अति प्रसंगात् अनुभवं विना संस्कारापरपर्यायवासनाया

असंभवाच्च. एतेनतत्तदर्थे समासं विदधता व्याकरणेन तेषु तेष्वर्थेषु स-

मासस्य शक्ति रेव प्रतिपाद्यते. अन्यथा क्वचिदपि व्याकरणाच्छक्ति

निर्णयासंभवात् तथा च शशशृंगाद्यखण्डशब्द प्रतिपाद्यं किंचिद्व-

श्यमेषितव्यं यत्र व्याकरणेन तत्तत्समासान्तानां साधुत्वानुशासनमि-

त्यपि परास्त । उक्तरीत्या शशशृंगादि शब्दे शक्तिग्रहासंभवात् ।

अतएव पंडितो ब्राह्मणः पाचक पाठक इति वत पंडितब्राह्मणः पाच-

क पाठक इत्यादावुद्देश्य विधेय भावेनान्वय वारणाय समुदायश-

क्ति मूलक एकार्थीभाव आवश्यकः सति हि तस्मिन घटपदाद्घट

घटत्वयोरिवेतरसंसृष्ट स्वार्थस्यैव समासादुपस्थित्योद्देश्य-

विधेय भावेनान्वय नियामिकायाः पृथगुपस्थितेरभावान्न दोषः अत-

वषट्कर्तुः प्रथम भक्ष इत्यत्र वषट्कर्तृ विशिष्ट भक्षानुवादेन प्राथम्य विधानो-

एव प्राप्ति माशंक्य प्रथम भक्ष इति समस्तैक पदं तन्नैक प्रसक्त्या लौकि-

रीन वषट्कर्तृ विशिष्ट भक्षणमुदिश्यायं रांशेन प्राथम्य विधानं युक्तं

तथा सति प्रसर भेदात्सामर्थ्य विधानेन समासो न स्यात् । एतेन

केवल भक्षानुवादेन प्राथम्यं विधीयत इत्याप्यपास्तं । न च सविशे-

षणत्वावृत्तिर्न स्यात् । प्रधानस्य तत्वे क्षत्यभावात् तस्मात्प्राथम्य-

विशिष्ठ भक्षात् । विधिरिति मीमांशकाः तस्मात्तथान्व-

यबोधे उद्देश्यवाचक पद समभिव्याहृत तद संसृष्टार्थ बोधकः

वीधेय वाचकपद जन्योपस्थिति रेवतंत्रा न च तथा शाब्दबोधं

प्रति उद्देश्य विधेय वाचक घटितैक समस्तपद भिन्न पद जन्योप-

स्यीति हेतुरिति पूर्वोक्ते पीत वासाश्चतुर्भुज इत्यादौ च नदो-
ष इति वाच्यं। सकल व्याप्ति भेद घटित गुरुतरकार्यकरणभाव-
कल्पनापेक्षया एकार्थीभावस्वीकारे लाघवात् मञ्चैव सप्तदशार-
त्निर्वाजपेयस्य यूपो भवति लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्य-
द्यपि चतुरवत्ती यजमानः पंचावत्तैव वपा कार्येत्यादौ वाजपेययूपार-
त्नियुष्णीष भवत्तचाग्र्यसप्तदशत्वालौहित्यपञ्चत्वानां वि-
धानं न स्यादिति वाच्यं। अत्र यूपारत्नि उष्णीषवचनाभातिदे-
श प्राप्ततया निवेशादुपदेशस्य बलाबलत्वेन तत्प्राप्तेः पूर्वमेतैर्विशिष्ट-
विधानस्वीकारेणाक्षतेः तत्पर्यालोचनया तु साप्तदश्यलौहित्य-
पंचत्वमात्रेषु तात्पर्यं गम्यते इति तावन्मात्रविधित्वव्यपदेशः न
चैवमन्यपारीत्या प्रथमभक्ष इत्यत्रापि प्राथम्यविशिष्टभक्षान्तर
विधिर्न स्यादिति वाच्यं। तत्तोभयोरप्युपदेशे तन्न तथा वक्तुम-
शक्यत्वादित्याधुनिकशाब्दिकोक्तिरपि परास्ता। पंडित ब्राह्मण
इत्यादावनुद्देश्यविधेयविधेयभावेनान्वयबोधाभावस्यानुभावि-
कत्वाद्विवाद संभवेन तादृशान्वयबोधे बाधकाभावेन तद्वारणाय

पनिरुक्तैकार्थीभावस्यानावश्यकत्वाच्चाघटवदेघटपदत्वयोः
पृथगुपस्थितत्वभावेन तयोरन्वयबोधाभावेपि पंडितब्राह्मण इत्या-
दौ समुदायशक्तिजन्य विशिष्टोपस्थितेर पृथगपत्वेपि समास-
घटक पंडितपदब्राह्मणपद जन्योपस्थित्योः पृथग्रूपतया तयोरन्व
यबोधस्य भवतामपिदुर्वारत्वाच्च । अत एवेत्यादिकमपि मंदमी
मीमांसकैस्ताद्दशैकार्थीभावानभ्युपगमेन तेषां तन्मूलक मद्धांतरवि
भ्युपगमस्यासंगतत्वात् । न च तदेकदेशिभिस्ताद्दशैका-
र्थीभावोभ्युपेयत इति वाच्यं । तदतभ्युपगंतृणमीमांसका-
नामपि मद्धांतरविध्युपगमेन तदुपपादनवर्त्मनैव सर्वेषांम-
द्धांतरविध्युपगमसंभवात् । किंच भवता समासे समुदाय शक्तौ स्व-
पैव निषाद स्थपतिं याजयेदित्यत्र निषादस्थपतिपदेकर्म-
धारयस्य न तु तत्पुरुषः तत्पुरुषात्कर्मधारयस्य लघुत्वादिति निषा-
दास्थपत्यधिकरणीयमीमांसासिद्धांत विविरोधो दुष्परिहारः सविन-
समासे एकार्थीभावानुरोधेन समुदाय शक्तेरावश्यकत्वेन कर्मधारय
तत्पुरुषयोर विशेषणलाघवाभावत् । अपोक्तसिद्धांतौ न ... ला-

धवमूलकीपेनोक्तानुपपत्तिः स्यात् । किंतु वैदिकसमासस्यकर्म-
धारयतत्पुरुषान्यतरत्व संदेहे कर्मधारयत्वमेव नतु तत्पुरुष-
त्वमित्यनादितात्पर्यमूलक नियममूलकस्येति न तद्विरोधः
यद्वा समासस्य विशिष्टार्थे शक्तौ निषादरूपः स्थपतिस्समासा-
र्थो निषादानां स्थपतिस्त्रैवर्णिको निषादभिन्नस्समासार्थो-
वेति संदेहे निषादभिन्नोपस्थित्य कल्पन प्रयुक्त लाघवेन नि-
षाद रूप स्थपतिरेव समासार्थ इति लाघवमूलकस्योक्त-
सिद्धान्त इति न तद्विरोध इति चेत्तुल्यंममापि तथाहि वषट्कर्तुः
प्रथमभक्ष इत्यत्र विशिष्टोद्देश्यकत्वं विशिष्ट विधायकत्वं
वेति संदेहे वैदिकवाक्यस्य विशिष्ट विधायकत्वमेव नतु वि-
शिष्टोद्देश्यकत्वमित्यनादितात्पर्यमूलक नियममूलकस्य-
विशिष्ट विधिरिति मतांतरविधिसिद्धान्ताविरोधः यद्वा विशि-
ष्टोद्देश्यकत्वे मतानुवादेन प्राथम्य वषट्कर्त्रोर्विधायक-
त्वे वा वाक्यभेदप्रयुक्त गौरवेण प्राप्तस्यैवानुवादेन वचनांतरप्रा-
प्त्यनुसंधान प्रयुक्त गौरवेण च न विशिष्टोद्देश्यकत्वनयाम-

क्षानुवादेन प्राथम्यवषड्कारो विधायकत्वं किंतु विशिष्ट-
विधायकत्वं । लाघवादिति लाघवमूलक स्वभक्षांतर विधिरि-
ति नत सिद्धान्त विरोधः न चैवमेकवाक्यत्वापत्ती भक्षांतरवि
धिरिति पर्यवसितां तथा चागते तादृशैकार्थी भावेनेति वाच्यं । तादृशै-
कार्थीभावाभ्युपगंतृभिरपि मीमांसकैरन्यैश्च समासादिवृ-
त्तौत द्भिन्नवाक्ये च्वैकवाक्यताया अभ्युपगमेनैकवाक्यत्वस्य-
तादृशैकार्थीभाव स्वरूपत्वाभावात् । नच तादृशैकार्थीभाव-
स्वरूपमेकवाक्यत्वं समासादि वृत्ति मात्रस्यतीयमन्यदेवा-
स्माभिरुपगम्यत इति वाच्यं । वृत्ति भिन्नस्थलीय कैकवाक्य
तयैव निर्वाहे वृत्ति मात्रस्थलीयातिरिक्तैकवाक्यत्व कल्प-
ने प्रमाणाभावात् । न च समर्थः पदविधिरित्यनुशासन-
मेव तत्र प्रमाणमिति वाच्यं । तत्र सामर्थ्यस्य व्यपेक्षारूप-
स्यैवोपगमेपि निर्वाहात् । तस्माद्वषट्कर्तुरित्यादौ भक्षोद्देश्य
कतत्प्राथम्य विधेयक बोधिसाति वषट्कर्तृद्देश्यक प्राथम्य
विशिष्ट भक्षांतरविधेयक शाब्दबोधे बाधकाभावेन समा-

रैनोद्देश्य विधेयभाविनान्वय इति स्ववासनामात्रविजृ-
म्भितमेव, युज्यते चैतत् महावाक्यार्थबोधे ऽवान्तरवाक्यार्थबो-
धस्य हेतुतया मुख्योद्देश्यक प्राथम्यबोधविनाषदकत्वेद्देश्यक-
विशिष्ट मवान्तरविधेयकबोधस्यानुपपत्तेरिति मात्सर्यमपहा-
यास्सुधीभिरालोचनीयं । यत्तु समासे उद्देश्य विधेयभावेना-
न्वयबोधे नीलघटो घटो नील इति समास सन्यासयोर विशे-
षणबोधादालंकारिकाणां मविमृष्ट विधेयांशस्य समासे दोषत्वो-
क्तिरसंगता स्यादिति घटो नील इत्यत्रैव निल विधेयकबोध
समासे प्राङ् निर्दिष्टस्यैवोद्देश्यत्वं चरमनिर्दिष्टस्यैव विधे-
यत्वमिति नियमादिति तदसत् । नात्रियमस्य समासतैरप्य-
नभ्युपगमात्, अन्यथा विधेयस्यान्यत्राप्युपसर्जनत्वे सति उद्देश्य-
यानंतर निर्देशाभावो दोषता प्रयोजकः समासे विधेयस्योपस-
र्जनत्वात् दोषत्वं वाक्ये तूद्देश्यानंतर्याभावात्तत्वमिति त-
दुक्तेरसंगतेः उद्देश्यानंतरनिर्देशाभावस्यैव दोषता प्रयोज-
कत्वोक्तेरुचितत्वात् । एवं चाविमृष्ट विधेयांशस्योद्देश्य-

विधेयभावेन बोधाजनकत्वं तद्दूषकताबीजं किन्तु पूर्वपदेन
स्वार्थे सिद्धत्वस्योत्तरपदेन साध्यत्वस्याभिव्यक्त्यापकर्षादि
प्रतीतिः मिथ्यामहिम्नामित्यादौ मिथ्यात्वस्योपसर्जनत्वेनासि-
द्धत्वमुग्धामूलुपकर्षाभिव्यक्तेः न्यक्कारो ह्ययमित्यादा-
वपि न्यक्कारस्य सिद्धत्वाभिव्यक्त्याऽभिमानिनो रावणस्यापक-
र्ष प्रतीतिस्तस्य समासे वाक्ये च दोषत्वे । वस्तुतस्तु उक्तस्य
दोषता प्रयोजकत्व उपसर्जन समासे त्वं वाक्ये तत्प्रयोजकं एवं
च समासे विधेयस्य यत्रान्ययोपसर्जनत्वं तत्र यथा तथास्तु
यत्र तु तस्य नान्यत्रोपसर्जनता तत्र समासे उद्देश्य विधेयभाव
नान्वयेन किमपि बाधकं पश्याम किं चाविमृष्ट विधेयांशत्व-
ले उद्देश्य विधेय भावेनान्वयबोधानुपगमे तस्याविमृष्टवि
उद्देश्यान्तर्भावश्च काव्यदोषाणां विधेयांशत्वमेवानुपपन्नं विधेयांशस्यै
वाभावात् । अपि च स्वसापकर्षे दृग्चमत्कारात्मावास्यैव दोषता
प्रयोजकत्वेन रसध्वनिकाव्ये अविमृष्ट विधेयांशस्थले
उद्देश्य विधेयभावेन बोधाभावेऽपि यत्र समासे तदंगीकारे बाधकी-

माव इत्याद्यन्यत्रस्तु व्यक्तमिति दिक् । वस्कंतस्क । समासे एका-
र्थीभावाभ्युपगमेपि न समुदायशक्तिसिद्धिः तथाहि एकार्थीभावो
न विशिष्टैकार्थप्रतिपादकत्वं विशिष्टस्य विशेषणाभ्यामनतिरिक्तेन
तिरिक्तत्वेन ऐक्यासंभवात् । किन्तु विशिष्टविषयताकबोधप्र-
योजकत्वरूपमेकवाक्यमेव तच्च समुदायशक्तिं विनाप्याकांक्षा-
दिसाधित्वात्तादृशविषयताशालिबोधजनकत्वाद्बोधयत्नं
न चैवं धवखदिरावित्यादौ समासानुपपत्तिस्तस्य धवत्वा-
द्यवच्छिन्ननानाविषयताकबोधजनकत्वादिति वाच्यं, तत्प्रयो-
ज्यविषयतया साक्षात्परंपरया वा निरूपिताया विधेयता तत्प्रयो-
जकत्वात्मकतदेकवाक्यत्वस्यैव निरुक्तप्रयोजकत्वरूपत्वात् ।
धवखदिरावित्यादौ च धवत्वाद्यवच्छिन्ननानाविशेष्यताक-
बोधजनकत्वादिति वाच्यम्, तत्प्रयोज्यविषयतया साक्षात्पर-
परया वा निरूपिताया विधेयता तत्प्रयोजकत्वात्मकतदेकवाक्यत्व-
स्यैव निरुक्तप्रयोजकत्वरूपत्वात् । धवखदिरावित्यादौ च धवत्वा-
द्यवच्छिन्ननानाविशेष्यतानिरूपितैकद्वित्वादिप्रकारताशालि

बोधोदयान्नानुपपत्तिः । इत्थं चायमिति पुत्रो राज्ञः पुरुषोपस्थापिता-
मित्यादौ राजपुरुष पदार्थानां समासरणाय समर्थ पदयोरेवयत्स-
मासानुशासनांतत्र सामर्थ्यं निरुक्तैकवाक्यतारूपमेव, तदेव चै-
कार्थीभाव शब्देनोच्यते व्यपेक्षापि निरुक्तैकवाक्यतायपवसि-
तेत्येतिव्यपेक्षैकार्थीभावयोरर्पितार्थनो भेदः किंतु शब्द भेदमा-
त्रमेवेतिव्यपेक्षैकार्थीभावयोर्भेदाभिमानवतां परस्परं कलहोप-
ज्ञान मूलक स्वेति युक्तमुत्पश्यामः । एतेन समासे समुदायशक्त्य-
ङ्गीकारे राजपुरुष इत्यादि शब्द सामग्र्या अनंत घटपटादि प्रत्य-
क्ष प्रति बंधकतायां सामग्री घटकतया विशिष्ठ विषयकोपस्थि-
तिरेकैव निवेश्यते इति लाघवं तदंगीकारेतु समास घटक पदार्थो-
पस्थिति द्वयादिकं निवेशनीयमिति गौरवमिति समुदायशक्ति
स्वीकार स्वोचित इत्यपि निरस्तं । उक्तरीत्या समुदाय शक्त्यंगी-
कारासंभवेन प्रामाणिक गौरवकस्यादोषत्वात् । वस्तुतस्त्वेका-
र्थीभावांगीकार्त्तृ वैयाकरणमते एकार्थीभावोनाम समासादि रूप
समुदाय शक्तिः राजपुरुषादि समुदायस्य राज संबन्धि पुरुषादि-

रूपविशिष्टार्थे शक्तिरितिनार्थः तथा सति राजादिपदैः सर्वथास्वार्थस्वराजादिपदैः सर्वथा स्वार्थस्य राजादेरुपस्थानेन तद्भानानुपपत्तेः पुरुषमात्रस्योपस्थापनं च स्यात् किंच राजपदार्थः पुरुषविशेषणमिति व्यवहारोन स्यात् यदि च समुदायेनैव राजसंबंधि पुरुषोपस्थापनेन राजादिभानोपपत्त्याद्य दोषेण संभवति किंचेत्यादि द्वितीयदोषोऽपि न समंजसः। निर्गन्धास्वपि सुमनस्सु आमोदान्वयमात्रेण चंपकपुट इत्यादि व्यवहारवत् तत्सदृशार्थान्वयमात्रेण तदारोपेण तथाव्यवहारोपपत्तेरितिभाव्यते तथापि समुदायस्य विशिष्टार्थे शक्तिर्न युक्ता अवयवानां स्वार्थवत्त्वात्मेनाशिपि तत्स्वीकारेण च गौरवापत्तेः किन्तु एकार्थीभावो नामैकार्थत्वं तच्च एकोपस्थिति विषयार्थकत्वं तथा चायमाशयः यथा वाक्ये प्रत्येकपदैः पदार्थानुपस्थिताकांक्षादिवशाद्विशेष्य विशेषणभावान्वय विशिष्टार्थप्रतीतिर्नैवं समासादिरूपवृत्तौ किंत्ववयवशक्तिभ्यां समुदायशक्ति सहकृताभ्यां जायमानापदार्थोपस्थितिरेव विशेष्य विशेषणभावापन्ना

विशिष्टार्थविषयिण्येव सर्वत्र भवति । न चैवं व्याकरणनये राजपुरुषादिपदं राजसंबंधवत्पुरुषे शक्तमित्याद्याकारक एव समुदायस्य शक्तिग्रहस्तत्र च प्राप्ताप्राप्तविवेकेन विशिष्टशक्तिः संबंधांश एव पर्यवस्यतीति संसर्गांशे समुदायशक्तिस्वीकारेण वाक्यवृत्त्योः को विशेष इति वाच्यं । वाक्ये हि कल्पबलात्पदार्थोपस्थिति समये नियमतः संसर्गांशे उद्बोधकासमवधानकल्पने पृथगुपस्थितयोः पदार्थयोः पश्चात्संसर्गबोधः वृत्तौ च पदार्थोपस्थिति समय एव नियमतः संसर्गांशेऽप्युद्बोधककल्पनेन विशिष्टैवोपस्थितिरिति विशेषात् । अत एव प्रायो दध्यादौ विशेष्यविशेषणभाववैपरीत्येन बोधः तत्राप्रयुज्यमानषष्ठ्याद्यर्थः संसर्गश्चेत्युभयमेव समुदायशक्तिसाध्यं अनन्यलभ्यत्वात् धवखदिरशक्त्यैव ब्राजादिरुपस्थिति संभवे तत्र समुदायस्यापि शक्तिकल्पने गौरवाच्च भार्यापौरभेदान्वयादि व्युत्पत्तयश्च पृथगुपस्थितभार्यादिविषयाः अत एव राजपुरुषैकदेशे राज्ञि वाक्य इवान्वयस्येत्यादि ~~वृत्त्यन्तरस्य पृथगुपस्थि~~तमा-

विशेषणान्वयेन, तस्य पदार्थैकदेशत्वादिति इत्यमेव वैया-
करणनवीनैरेकार्थीभाव पक्षे समुदायशक्तिरित्यनिष्कर्षः कृत-
स्वं च नैयायिकमते प्रत्येक राज पद पुरुष पद जन्योपस्थित-
द्वय घटिता शाब्दसामग्री वैयाकरणमते च राज पद पुरुष-
पद समुदायैत त्रितयजन्यैक विशिष्टोपस्थिति घटिता शा-
ब्द सामग्रीति स्कत्र त्रितय जन्यत्व निवेशे विशेष्य विशे-
षण भाव विनिगमना विरहेण कारणता बाहुल्य रव्छेदक गौ-
रवं च वैयाकरणमते, नैयायिकमते च लाघवमिति स्पष्टमेव।
तस्माद्राजपुरुष इत्यादि समासे राजादि पद लक्षणयैव शाब्द
बोध इति सिद्धं। नवीनास्तु राजपुरुषत्यादि समासे न राजा-
दि पदस्य राज संबंध्यादौ लक्षणा न वा समुदाये शक्तिः किंतु स्वात
संबंधेन राजादेः पुरुषादावन्वयेन राजकीयः पुरुष इत्यादि-
रेवान्वयबोधः। न च नामार्थयो भेदान्वयस्याव्युत्पन्नतया कथ-
मुक्तरीत्यान्वयबोध इति वाच्यं। यतः पदानां त्यावधानुरोधेनैव
समासानुरोधेनापि तादृश व्युत्पत्तेस्संकोचकल्पनात्। वस्तु-

तस्क ताद्दशव्युत्पत्तौमानाभावः । नच ताद्दशव्युत्पत्यनंगीका-
रे राजापुरुष इत्यादावपि पुरुषादिविशेष्यक राजादिप्रकारस्व-
त्व संसर्गक वोधापत्तिरिति वाच्यं । ताद्दश वोधस्या प्रसिद्धं वात्पसं-
भवात् । नच राज्ञ इत्यादौ यत्र षष्ठ्यादि विभक्तेरेव स्वारसिक-
लक्षण या शक्तिभ्रमेण वा पुरुषाद्युपस्थिति स्तत्र तद्विशेषक राजा-
दि पदार्थ प्रकारकस्वत्व संसर्गकान्वय वोधस्य प्रसिद्धौ तदा-
पपत्तिस्संभवतीति वाच्यं । तत्र ताद्दश प्रकृति प्रत्ययानुपूर्वीप-
विशेषरूपाकांक्षाज्ञान सहकृतत्त द्विभक्तिजन्य पुरुषा-
द्युपस्थिति घटित सामग्र्या एव ताद्दश वोधोत्पत्ति नियामकत्वा-
त्या तदभावादेवोक्तापत्त्य संभवात् । अत एवस्वत्व संबंधे-
न राजादि विशिष्ट पुरुषादि तात्पर्येण तद्वादि पद घटितात्सु-
सुंदर इत्यादि वाक्यात्पुरुषादि विशेष्यक स्वत्व संसर्गक
राजादि प्रकारक वोधस्य प्रसिद्ध्या राजा पुरुषः सुन्दर इत्या-
दौ ताद्दश वोधापत्तिस्संभवतीति ताद्दशव्युत्पत्ति कल्पनमा-
वश्यकमिति अपिपरास्तं । सस्सुन्दर इत्यादि वाक्याधीनत्र-

शाब्दबोधसामग्र्यास्तत्पदत्वाद्यवच्छिन्न विशेष्यकसुन्द
रादि पदसमभिव्याहारज्ञानसहकृततद्यादि पदजत्यतादृश-
विशिष्टार्थोपस्थितिघटिततया तदभावादेव राजा पुरुषः सु
दर इत्यादौ तादृशान्वयबोधापत्तिवारण संभवात् । समा-
साघटक पदोपस्थाप्येन समासाघटक पदार्थस्य च नान्वयः
आकांक्षाविरहात् अतस्तच्छब्दस्य राजमातंगइत्यादौ अश्वा-
दि पदार्थस्य राजादौ योग्यता सत्त्वेपि नान्वयः यद्यपि सम-
भिव्याहाररूपाकांक्षा संभवति तथापि समभिव्याहारमात्रं
नाकांक्षा अपित्वन्वयबोध विषय विशेषयोः समभिव्या-
हारानामार्थयोरभेदान्वयबोधे च समानविभक्तिकयोर्भो-
समभिव्याहार आकांक्षा उक्तस्थले च राजपदस्य निर्विभ-
क्तिकतयानतत्समभिव्याहार राज्ञोरभेदान्वयबोधो-
पयिकाकांक्षा राजपदोत्तरं पदिकृद्ध षष्ठी प्रतिसंबंधितया-
दाशौ भानं तदधीत्याद्य विवतत्रापि तादृशाकांक्षावत्तेतस्य
अन्वयबोधोपि भवति पदं त्वसाधुतयानतथा प्रयुज्यते अत-

स्वशोभनेचार इत्यादौ विरूपया पाद्यस्या: पुत्र इत्यादौवनद्या-
स्यादौ शोभन विरूपाद्य भेदान्वयबोधौपयिकाकांक्षासत्वे नान्व
यबोध संभवेपिन तथा प्रयुज्यते । असाधुना चनत्रा सामर्थ्या
र्यातिदेशात् । सापेक्षम समर्थवद्भवतीति स्मृते: सापेक्षत्वे
च प्रकृतसमासानि विष्टपदार्थान्वितस्वार्थपरत्वं प्रधाना
र्थ बोधक पद सापेक्षत्वेपि समास: साधु: राजपुरुषोदर्श
नीय इत्यादौ उत्तरपदस्य दर्शनीयादि सापेक्षत्वेपि समास-
साधुत्वात् प्रधानत्वं चार्थस्य समासजन्य बोधे मुख्यावि-
शेष्यत्वं राजपुरुषमानयेत्यादौ पुरुषादे: कर्मत्वादिवि
शेषणतयाभानेपि समासजन्य अवान्तर वाक्यार्थ बोधे
मुख्य विशेष्यतया दर्शनीयं राजपुरुषमानयेत्यादौ समास:
साधु:न चैवं चित्रगुरित्यत्रगोपदस्य लक्षणया गोस्वामि-
बोधकतया समासजन्यबोधे चतस्य मुख्य विशेष्यत यागो
पदं प्रधानार्थकमेवतदुपस्थाप्यायोग विसमासानि विष्ट-
शोभनादि पदार्थान्वय विवक्षायामपि समाधुतास्यादिति-

गाच्यं । प्रधानार्थे इतरान्वय एव समासस्य साधुत्वात् उक्तस्थले

च स्वामिविशेषणतया गौर प्रधानत्वात् । अन्यसापेक्ष पदे समास-

स्यासाधुत्वे चैत्रस्य दासभार्याशेरे : शाति तपत्नी वृक्ष इत्यादौ

दास शाति तादि पदस्य चैत्र शरदि पद सापेक्षतया समासो न सा-

धु: स्यात् अभेदेनेतरान्वयिताया: सापेक्षताघटकत्वे चैत्रस्य-

गौरूपमित्यादेरपि गवि चैत्रादि संबंधान्वय विवक्षया प्रयोगापत्ते:

एवं चैत्रस्य सख्युर्धनमित्यर्थे चैत्र सखि धनमिति समासो-

न स्यात् पदत्रयस्थले तत्पुरुषाभावात् सख्युर्धनं सखिधन-

मित्यादि समासानंतर चैत्रस्य सखिधनं चैत्र सखिधनमिति-

समासस्यैवादरणीयत्वात् । तत्र चैत्र संबंधित स्वप्रकृत समा-

सानि विष्ठ चैत्रपद मुख्यार्थस्या भेदेन सखि पदार्थान्वयित्वात्

एतेन कारक प्रति योगि पदातिरिक्त पद सापेक्ष पदं नैव स्समा-

स: तदुक्तं कांतंत्र परिशिष्ठ कृता । कारक प्रति योगिभ्यामित्यादि

चैत्रस्य दास भार्या इत्यादौ दासत्वस्य प्रति योगिकामिति चैत्रप-

दस्य दास पदार्थ प्रति योगि बोधकतया शेरे : शाति त पत्र स्था

दौशरादि पदस्य शातनादि क्रियायां कारकबोधक तपास-
मासः साधुरित्यपि परास्तं । चैत्रसाखिधनमित्यादौ चैत्रादिसं-
बंधार्थक चैत्रादि पदस्य प्रतियोगि पदत्वाभावात् चित्रसं-
बंधिनः सखित्वादा प्रतियोगित्वात् नैवं । यत्र द्विसमस्यमान प-
दार्थे विशेषण रूपेइतरान्वय विवक्षातत्र सम्भाभानभवति यत्र
तादृश पदार्थावच्छेदके इतरान्वयस्तत्रभवत्येव चैत्रस्यदास
भार्या इत्यत्र दासत्वे चैत्रादि संबंधस्यान्वये ननु दासपदार्थे
दासेश्वरौ शाति तपत्र इत्यादौ शातने शरकरण कत्वा देरन्व
यः ननुशातित पदार्थे शातन कर्माणि कर्माणि अतो भवत्येवस-
मासः चैत्रसाखि धनामित्य त्रापि सखित्व एव चैत्र संबंधिनोन्वयः
नन्वखरिव पदार्थे सख्याविशिनानुपपत्तिः नचैवदासत्वादौ प्रमेया-
दिपदार्थान्वय विवक्षणे प्रमेयं दासभार्येति प्रयोगापत्तीरिति
वाच्यं प्रमेयोदास इत्यादावपि पदार्थैकदेशे दासत्वादौ प्रमे-
याद्यभेदान्वय विरहात् तत्रैकदेशान्वयस्याव्युत्पन्नतया-
तथाप्रयोग विरहात् षष्ठ्याद्युपस्थित प्रतियोगित्व स्यत

क्षणयासस्यमान पदोपस्थाप्यतत्तत्प्रातियोगिकत्वावच्छि-
न्न रूप च भेदाभेदाभ्यां सम्बंधिक दासत्वादावन्वयोद्बु-
द्धत्वात् विरुद्ध स्वचैत्रस्य दासश्चैत्र दास इत्यादौ तादृशान्वय-
बोधोदयात् अत एव चैत्रस्य दासभार्या इत्यादौ निर्वाहः अथैवं
पितुः स्वर्गकामस्त्यादि प्रामाणिकनोदना दि वाक्यं न साधु
स्यात् तत्र समस्यमान स्वर्गादि पदार्थे स्वर्गादावपि पित्रादि-
संबंधान्वयात् इति चेन्न, कामनायामेव पित्रादि संबंधस्य
स्वर्ग मागित्वेन विषयता विशेषरूपत्यान्वयो न तु स्वर्गा-
दावित्युपगमेन सामंजस्यात् अतो मुक्तं पितरमुद्दिश्य दा-
नादिस्थले पितरि स्वर्गस्य बाधेपि न तादृश वाक्यस्यायोग्य-
तानर्थैवमपि कामना बोधकपस्यैव समासाघटक पद
सापेक्षतया न समासः स्यात् तत्पस्य प्रधानार्थ-
कत्वेपि प्रधानार्थक पस्यापि प्रधानार्थे मुख्यविशेष्ये-
इतरानन्वयेन सापेक्षतया समासविरहात् अन्यथा शो-
भनचित्रगुरित्यादि प्रयोग प्रसंगतः पूर्वोक्त दोषापत्तिरितिवा-

च्यं । क्रियाभिन्नप्रधानार्थकपदोपस्थाप्ये विशेषणांशे-
इतरान्वयेनैव प्रधानार्थकपदस्यसापेक्षत्वात् । प्रकृते च-
चकामतायाः क्रियात्वात चैत्रस्य कृतोपकारोयमित्या-
दि प्रयोगोऽपिष्यत एव क्रियाभिन्नत्ववत्सप्रतियो-
गिकान्यत्वमपि अर्थे विशेषणं देयं अतश्चैत्रस्य सु-
न्दरः पुत्रो मित्यादौ पुत्रत्वादौ चैत्र संबधान्वयेऽपि नस-
मासानुपपत्तिः । नचैवं चैत्रस्य दृष्टपुत्रो मैत्र इत्यपि-
स्यादिति वाच्यं । इष्टत्वादिति दिगिति प्राहुः अथ गंगा-
यां घोष ~~[illegible]~~ इत्यादौ कर्णं शैत्यपावन-
त्वादि विशेषस्यबोधस्तत्र गंगापद शक्ति लक्षणयो-
रभावादिति चेत्र व्यंजनयैव तस्य बोधात व्यंजना च वृत्त्यंतर-
मित्यालंकारिकाः तन्न चारु गंगायां घोष इत्यादौ शैत्यपा-
वनत्वादि विशेष विशिष्टस्य लक्षणयैव प्रतीति
संभवेन व्यंजनायोमानाभावात् । नचैवं शैत्यविशेषा-
दिविशिष्टस्य व्यंग्यस्यपूर्वमनुपस्थितत्वात् तत्र शक्यसं-

वं धायच्छान्न लक्षणया निर्वाह इति वाच्यं । विशिष्ट-
स्यानुपस्थितौ व्यजनाया अर्पनहीयत्वेना ग्रहावबोधक-
त्वापत्तेः नच सा स्वरूप सतीत बोधिका, तर्हि अर्थात-
राणामपि बोधापत्तेः गंगापदेन कदाचिद र्थांतराणाम-
पि व्यंजनया बोधनात् । तत्र व्यंजना सत्वात् अपगंगापदे-
लक्षणया गंगात्वेन तट प्रतीतौ तत्सहितेन गंगापदेन शैत्य-
पावनत्वादि विशेष विशिष्टस्य स्मृतिस्त दानहीयत्वेन
व्यंजना ग्रहात्तद्धर्म विशिष्ट शाब्दधीः यदि च तद्धर्म विशि-
ष्टे लक्षणा ग्रहादेवतद्धीस्तदा लक्षणयैव गंगात्वेन तट प्रतीतिज-
नितत्वान्न तया कुमबोधिजननामिति चेत्र । सैंधवे स्थीपतद्वि-
त्यादौ उभयपरत्वे शक्त्या एकबोधे जनितेऽपि आवृत्त्या शब्दे-
नैव बोधांतर जनन स्वधर्मविशिष्ट शाब्दधियनुपपत्तेः अ-
थ स्वज्ञाप्य संबंधरूप व्यजनायत्र शक्तेः शक्य संबंधरूप-
वान पदार्थयोः संबंधमर्यादया मानं किन्तु स्वज्ञाप्य संबं-
धस्यैव संसर्गतातत्र व्यजनयैव शाब्दधीः अतएवाप-

तथाप्रतीतिरनुदयादतो व्यंजनाधीनैव सा प्रतीति: लक्षणया तादृशप्रतीतौ च लक्षणाधीनलाक्षणिकप्रतीतौ लाक्षणिक



मंशादावपि व्यंजनास्वशाब्य संबंधस्य सत्वादिति चेन्न

शक्ति। शक्य संबंधस्यवाऽभाने शाब्द प्रतीतिरसिद्धे। अयगौ-

र्वाहीक इति पदाद्वास्ति जाड्य विषय विशिष्ठ प्रतीति-

रानुभविकी सा च न शक्यधी: जडोपजडत योपमित्यादितस्मादि

तस्तादृश प्रतीत्यनुपपत्ते: । न वा लक्षणयातद्वी

पदोत्तरेण लक्षणयापि प्रतीति हेतुत्वात् पानादिति चेन्न

लाक्षिणीक सामान्येऽहेतुत्वेपि लक्षणया गोपाधिनायां

याग्र विशेष्य विशिष्टस्य प्रतीतौ लक्षणया गोत्वेन वाहीकप्र-

तीतेर्हेतुत्व स्वीकारात् वृत्यंतर कल्पनापेक्षया ईदृश हेतुत्व-

कल्पनाया एव लघीयस्त्वात् । अथ सत्यपि बाधग्रहे क्वचिद्

धविशेषाणां प्रतीतिरस्ति सा च व्यजनयैव न तु लक्षणया लाक्षणि-

क बोधे बाधग्रहस्य विरोधित्वात् व्यांजनिक बोधे तु न तस्य वि-

रोधित्वं दोषविशेषाजन्यत्वस्यैव व्यंजनाऽजन्यत्व स्यापि

प्रमिवध्यतावच्छेदक कोटौ प्रवेशादिति चेन्न । लक्षणा वि-

शेषाजन्यत्वस्यैव दोषविशेषाजन्यत्ववत्प्रतिवध्ये प्रवेशितु-

मुचितत्वाल्लघुतर कल्पने गौरवादिति संक्षेप इति नैयायिकसिद्धा-
न्तानुसारिणीसरणिः 'अथालंकारिक धुरंधराः ।काव्यं यशसे-
ऽर्थकृते व्यवहारविदे शिवेतर क्षतये सद्यः परनिर्वृतये कान्तासं-
मिततयोपदेशयुजे इति काव्यप्रकाशकारोक्त्या अदोषं गुणवत्का-
व्यमलंकारैरलंकृतं । रसान्वितं कविं कुर्वन कीर्त्तिं प्रीतिं च विंदतीति
व्यासोक्त्या चानेक प्रयोजनवत्वापि नीरसोऽपि निबंधीयः सोऽपश-
ब्दो महाकवेः स तेनाकवितैवस्यादन्येनास्मृत लक्षण इति ध्वनिका-
रोक्त्या स्वादुपाकेप्यनास्वाद्यं भोज्यं निर्लवणीयथा तथैव नीरसं-
काव्यं स्याद्योरसिकतुष्टय इति चोक्त्या रसप्रीतिर्मुख्यं प्रयोजनं दोषा-
भावगुणालंकारवच्छब्दार्थोभयरूपस्य काव्यस्येत्यवगम्यते स च रा-
सौवैसः इत्यादिश्रुति प्रतिपादितं विभावानुभावादि संवलितं आनंदांशे-
भग्नावरणं मनोवृत्ति विशेष रूपं रत्याद्यवच्छिन्न चैतन्यत-
त्प्रतिपत्तिश्च ब्रह्म प्रतिपत्तिवदवश्यमपेक्षिता सहृदयानां सा-
च काव्यादिति काव्यस्य तस्य च संबंधमंतराति प्रसंगसंभवाद-
वश्यमेषितव्यो व्यापारः कश्चित स च शक्तिलक्षणातिरि-

रुएवेति व्यंजनाख्य एव भवतीति महामुनि भरतराद्धांत। अत्र के-
चिदाहु: शक्त्यैव तत्प्रतिपत्ति संभवे व्यंजनाख्यवृत्त्यंतरकल्पन म-
युक्तमिति तत्र। अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छा रूप संकेत:
शक्तिरिति तार्किकमते ईश्वरेच्छाया: सर्वविषयकत्वेन सर्वशब्दानामे-
कैव शक्ति: स्यात् उपाधिभेदाभेद इति यदि तदा प्रतिशब्दे शक्तिभेदापत्ति:
शक्यतावच्छेदकैक्यादनुगमे पर्यायशब्दानां शक्यतावच्छेदकैक्येपि श-
क्तितावच्छेदकभेदाच्छक्तिभेदस्वीकरणेन सामंजस्यभावे तु किं चेश्वरे-
च्छाया शब्दावृत्तित्वाच्छक्ते। शब्दनिष्ठत्वं न स्यात् विषयत्वरूप संबंधस्य तु अर्था-
दावपि प्रसक्तत्वात् लाक्षणिकशब्दस्यापीश्वरेच्छावि-
षयत्वेन शक्तत्वसंभवेन लक्षणोच्छेदप्रसंगाच्चेति औत्पत्ति-
कस्तु शब्देनार्थस्य संबंध इति परमर्षिसूत्रानुरोधेन स्वा-
भाविक एव अर्थप्रतीतिजननसामर्थ्यरूप: शब्दसंबं-
धः शक्ति: न च घटपदे गृहीतौ तादृशशक्तिकस्य कलश-
पदश्रवणोत्तरमर्थबोध: स्यात् शक्तेरेकत्वादिति वाच्यं। कल-
शपदनिष्ठत्वेनाग्रहात्। न चैतादृशसंबंधरूपशक्तेर्लाक्षणिकेपि-

पि सत्वाल्लक्षणोच्छेद इति वाच्यं । अन्वितशक्तिवादे-
लाक्षणिके अन्वितानुभव जनन सामर्थ्यानंगीकारादन्वितानुभव
जनन सामर्थ्य रूपशक्तेस्तत्रा सत्वात् लक्षणा यास्तु पदार्थस्मरण-
मात्र हेतुत्वात् अतएव लाक्षणिकम् नानुभावकमिति प्रसिद्धिः अभि-
हितान्वयवादे तु पदशक्त्योपस्थितेषु पदार्थेष्वन्वया योग्यता प्रतिसंधा-
ने तात्पर्यानुपपत्ति प्रतिसंधाने वा पदार्थेनैव स्वसंबंधि पदार्था-
तरं वाक्यार्थान्वय योग्यमुपस्थाप्यते तत्र पदार्थनिष्ठैव लक्षणा
न पदनिष्ठा पदार्थैरेव च वाक्यार्थो लक्ष्यते न तु पदैरिति न
लाक्षणिकोक्तत्व प्रसंगः पदे लाक्षणिकत्व व्यवहारस्तु परंपरयेति-
ह्यते विभानुभावादि पदानां विभावाद्यर्थेष्विव शक्तेः सत्वात्पदां-
तराशक्तेश्च न रसस्य वाच्यत्वं न च विभावादि शक्तिरेव तत शक्ति-
रिति वाच्यरसस्य विभावादि मात्ररूपत्वाभावात् अतएव भरतेनाभि-
हितस्य व्यक्तः सैर्विभावाद्यैः स्थायी भावो रसस्मृत इत्यस्य सहृदय
व्यतीयतस्य विभावादि साहितैः तैर्व्यक्तः स्थायी रस इत्यर्थोभिहितोभि-
युक्तैः —